शौटीर्याब्धिरुरोजपञ्जरतटे संवेशयन्त्या कथं
स श्रीमान् हरिरेषको हरिरमूनेत्रेण बद्धस्त्वया ॥ १८ ॥

अथ पूर्णाम्—

नितम्बो विपुलो मध्यं कृशमङ्गं वरद्युति ।
पीनौ कुचावूरुयुगं रम्भाभं पूर्णयौवने ॥ १९ ॥

यथा—

दृशोर्द्वन्द्वं वक्त्रां हरति शफरोल्लासलहरी-
मखण्डं तुण्डश्रीर्विधुमधुरिमाणं दमयति ।
कुचौ कुम्भभ्रान्तिं मुहुरविकलां कन्दलयत-
स्तवापूर्वं लीलावति वयसि पूर्णे वपुरभूत् ॥ २० ॥

---

प्रहिल्य तद्वारैव भवती सिंहमबध्नादिति विस्मयः । श्लेषेण तु नेत्रेण मन्थनदोर-केण सिंहं बन्धुमिच्छन्त्यास्तव गोपीत्वात्तदेव बन्धनसाधनमुचितमेवेति भावः । किमर्थमुरोज एव पञ्जरं तत्तटे संवेशयन्त्या शाययन्त्या । हेतौ शतृप्रत्ययः । 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश' इत्यमरः । न च स सिंहोऽपि साधारणधर्मे-त्याह—**शौटीर्येति** । शौटीर्यं पराक्रमस्तस्याब्धिरिति, पक्षे परमसुकुमारया त्वया तस्य महाबलस्य श्रीकृष्णस्य शृङ्गाररससंमर्दः कथं सोढव्य इति नर्म ध्वनितम् । यस्य हरेः सिंहस्य, पक्षे श्रीकृष्णस्योल्लिखद्भिरुच्चैर्लिखद्भिः, पक्षे उच्चैरेखाङ्कवद्भिर्नखैः क्षिप्ता वरदन्तिमौक्तिकगुणाः श्रेष्ठगजमुक्ताराशयः, पक्षे हे वरदन्ति इति पृथक्पदम् । उभयपक्षेऽपि करिकुम्भस्तनौ कर्मभूतावाक्षेपलब्धौ प्रविश पिण्डमित्यत्र गृहं भक्षयेतिवज्ज्ञेयौ । कीदृशाः । पुष्करमालया छिन्नकरिशुण्डाग्रश्रेण्या, पक्षे निर्मा-ल्यकमलमालया आवृता रुचः कान्तयो येषां ते । 'पुष्करं करिहस्ताग्रे' इत्यमरः ॥ १८ ॥ १९ ॥ वृन्दाह—**दृशोरिति** । पद्मकन्दलयतोऽङ्कुरयतः । प्रकाशयत

---

समहः । संवेशयन्त्या शाययन्त्या । नेत्रेण चक्षुषा, पक्षे मन्थनदोरकेण ॥ १८ ॥

तन्माधुर्यम्—

न वित्रस्ता का ते प्रति युवतिरासीन्मुखरुचा
दधार स्तैमित्यं प्रणयघनवृष्ट्या तव न का ।
व्रजे शिष्या काभून्नहि तव कलायामिति हरे-
र्निकुञ्जस्वाराज्ये त्वमसि रसिके पट्टमहिषी ॥ २१ ॥

**तारुण्यस्य नवत्वेऽपि कासांचिद्व्रजसुभ्रुवाम् ।**
**शोभापूर्तिविशेषेण पूर्णतेव प्रकाशते ॥ २२ ॥**

अथ रूपम्—

**अङ्गान्यभूषितान्येव केनचिद्भूषणादिना ।**
**येन भूषितवद्भाति तद्रूपमिति कथ्यते ॥ २३ ॥**

यथा दानकेलिकौमुद्याम्—

त्रपते विलोक्य पद्मा ललिते राधां विनाप्यलंकारम् ।
तदलं मणिमयमण्डनमण्डलरचनाप्रयासेन ॥ २४ ॥

यथा वा विदग्धमाधवे—

नीतं ते पुनरुक्ततां भ्रमरकैः कस्तूरिकापत्रकं
नेत्राभ्यां विकलीकृतं कुवलयद्वन्द्वं च कर्णार्पितम् ।

---

इति यावत् । वयसि यौवने ॥ २० ॥ श्रीराधासौभाग्याद्विषीदन्तीं चन्द्रावलीं पद्मा समाश्वसिति—**न वित्रस्तेति** । प्रतियुवतिः प्रतिपक्षगोपी ॥ २१ ॥ २२ ॥ २३ ॥ वृन्दाह—**त्रपत इति** । मम सखी चन्द्रावली एवं सौन्दर्यवती न भवतीति स्वपक्षोत्कर्षच्युतिजनितेयं लज्जा ॥ २४ ॥ भूषितवद्भान्तीत्येषोऽर्थो नात्र शब्दोपात्तोऽभूदित्यपरितुष्यन्नाह—**यथा वेति** । श्रीकृष्णः प्रसाध्यमानां श्रीराधामाह—**नीतमिति** । भ्रमरकैरलकैः ॥ २५ ॥ छायायाः कान्ते-

---

॥ १९ ॥ २० ॥ २१ ॥ तारुण्यस्य तत्समयस्य शोभापूर्तिर्दशोरित्यादिवर्णिता । **पूर्णतेवेति** । यथान्यत्र पूर्णतावस्था तथेत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ पुनरुक्तादिशब्दा व्यर्थीकृतवाचकाः शब्दभेदविन्यासभङ्ग्या सरसाः ॥ २५ ॥

हारश्च स्मितकान्तिभङ्गिभिरलं पिष्टानुपेषीकृतः
किं राधे तव मण्डनेन नितरामङ्गैरसि द्योतिता ॥ २५ ॥

अथ लावण्यम्—

मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते ॥ २६ ॥

यथा वा—

जगदमलरुचीर्विचित्य राधे व्यधित विधिस्तव नूनमङ्गकानि ।
मणिमयमुकुरं कुरङ्गनेत्रे किरणगणेन विडम्बयन्ति यानि ॥ २७ ॥

यथा वा—

शृणु सखि तव कर्णे वर्णयाम्यत्र नीचै-
र्विरचय मुखचन्द्रं मा वृथागाद्विवर्णम् ।

---

स्तरलत्वं तरङ्गायमानत्वम् । यथा तथा यदन्तरा मध्ये एवाङ्गेषु प्रतिभाति प्रतिमानं भवेदित्यर्थः । अतिस्वच्छत्वादाधिक्याच्च प्रतिक्षणमुद्गच्छन्त्य इव कान्तयो यतो लक्ष्यन्ते तल्लावण्यमुच्यत इत्यर्थः ॥ २६ ॥ श्रीकृष्ण आह—जगत्सु या या अमला रुचय आसंस्ता एव सर्वा विचित्य ततस्ततः समाहृत्यैव व्यधित अकरोत् । अत एव जगत्सु त्वदङ्गसादृश्यं न दृश्यत इति भावः । अङ्गकानीत्यनुकम्पार्थकप्रत्ययेनाङ्गानां सुभगत्वं सुकुमारत्वं चोक्तम् ॥ २७ ॥ श्रीराधाङ्गनिष्ठं लावण्यमुदाहृत्य श्रीकृष्णनिष्ठमपि तदुदाहर्तुमाह—**यथावेति** । एवमग्रेऽपि यथावे-

---

छायायाः कान्तेस्तरलत्वमिवेति तरङ्गायमानत्वमित्यर्थः । लावण्यशब्दः खलु लवणाशब्दप्रकृतिकः । लवणा हि कान्तिरुच्यते । 'लवणा रसभेदः स्याल्लवणा तु नदीविशेषः ।' इति मेदिनीकारकोषात् । ततश्च लवणास्मिन्नस्तीति लवणः । अर्श आद्यच् । तस्य भावो लावण्यम्, लवणिमा चेति सिद्धम् ॥ २६ ॥ व्यधित अकरोत् । विडम्बयन्ति निन्दयन्ति । तत्रेदृशलावण्यभावात्तिरस्कुर्वन्ति ॥ २७ ॥ **शृणु सखीति** । परमलावण्ययुक्तस्वप्रतिबिम्बेन स्वसदृशी काचिदन्याप्यस्तीति

इयमुरसि मुरारेरस्ति नान्या मृगाक्षी
मरकतमुकुराभे बिम्बितासि त्वमेव ॥ २८ ॥

अथ सौन्दर्यम्—

**अङ्गप्रत्यङ्गकानां यः संनिवेशो यथोचितम् ।**
**सुश्लिष्टसंधिबन्धः स्यात्तत्सौन्दर्यमितीर्यते[1] ॥ २९ ॥**

यथा—

अखण्डेन्दोस्तुल्यं मुखमुरुकुचद्योतितमुरो
भुजौ स्रस्तावंसे करपरिमितं मध्यममितः ।
परिस्फारा श्रोणी क्रमलघिमभागूरुयुगलं
तवापूर्वं राधे किमपि कमनीयं वपुरभूत् ॥ ३० ॥

अथाभिरूपता—

**यदात्मीयगुणोत्कर्षैर्वस्त्वन्यन्निकटस्थितम् ।**
**सारूप्यं नयति प्राज्ञैराभिरूप्यं तदुच्यते ॥ ३१ ॥**

---

त्यस्यैवमेवावतारिका ज्ञेया । श्रीकृष्णस्याग्रतएवोपविश्य खेलन्तीमन्तर्मानोदयां श्रीराधां परामृश्योपरिष्टादस्यामुपहस्यमानताभूदिति विशाखा बोधयन्ती तामाह—**शृण्विति** ॥ २८ ॥ अङ्गानां बाह्वादीनां प्रत्यङ्गानां प्रगण्डप्रकोष्ठमणिबन्धादीनां यथोचितं स्थौल्यकार्श्यवर्तुलत्वादिकं यत्रयत्र यद्यदुचितं भवति तदनतिक्रम्य संनिवेशः सुश्लिष्टः यथोचितं मांसलत्वेनैक्यमाप्तः संधीनां कफोण्यादीनां बन्धो यस्मिन् सः ॥ २९ ॥ श्रीकृष्ण आह—**अखण्डेन्दोरिति** । अंसे स्कन्धे । स्रस्तौ नतावित्यर्थः । मध्यममितो मध्यस्य सर्वदिक्षु करेण करविस्तारेण परिमितम् । करेणैव ग्रहीतुं शक्यमित्यर्थः । 'अभितःपरितःसमया' इत्यादिना द्वितीया ॥ ३० ॥ यदिति

---

समत्सरां श्रीराधां प्रति सखीसान्त्वनम् ॥ २८ ॥ २९ ॥ अंसे स्कन्धे स्रस्तौ नतावित्यर्थः । नम्राविति वा पाठः ॥ ३० ॥ रूपमङ्गान्यभूषितानीत्यादिना लक्षितं यत्तदेव । किमपि विरलप्रचारमनिर्वाच्यमास्वाद्यमानत्वेऽपि निर्वक्तुमशक्यं चेत्तदा

---

१. 'मुदीर्यते' इति च पाठः.

यथा—

मग्ना शुभ्रे दशनकिरणे स्फाटिकीव स्फुरन्ती
लग्ना शोणे करसरसिजे पद्मरागीव गौरी ।
गण्डोपान्ते कुवलयरुचा वैन्द्रनीलीव जाता
सूते रत्नत्रयधियमसौ पश्य कृष्णस्य वंशी ॥ ३२ ॥

यथा वा—

वक्षोजे तव चम्पकच्छविमवष्टम्भोरुकुम्भोपमे
राधे कोकनदश्रियं करतले सिन्दूरतः सुन्दरे ।
द्रागिन्दिं[1]न्दिरबन्धुरेषु चिकुरेष्विन्दीवराभां वह-
न्नेकः कैरवकोरको वितनुते पुष्पत्रयीविभ्रमम् ॥ ३३ ॥

अथ माधुर्यम्—

**रूपं किमप्यनिर्वाच्यं तनोर्माधुर्यमुच्यते ।**

यथा—

किमपि हृदयमभ्रश्यामलं धाम रुन्धे
दृशमहह विलुण्ठत्याङ्गिकी कापि मुद्रा ।

---

कर्तृपदम् । अन्यद्वस्तु कर्मभूतम् । सारूप्यं स्वतुल्यरूपत्वम् ॥ ३१ ॥ श्रीकृष्णेन वाद्यमानां वंशीं दूराद्दर्शयन्ती विशाखा श्रीराधामाह—**मग्नेति** । सूते जनयति ॥ ३२ ॥ **यथावेति** । अत्र नायकनायिकयोः शृङ्गाररसस्य परस्परविषयाश्रयत्वे परस्पररूपादीनां परस्परोद्दीपनत्वेन वर्णने पूर्वपश्चाद्भावो न नियम्यत इति ज्ञेयम् ॥ श्रीकृष्ण आह—**वक्षोज इति** । कैरवकोरकः श्वेतोत्पलकलिका, अवष्टम्भः स्वर्णम्, कोकनदं रक्तोत्पलम्, इन्दिन्दिरो भ्रमरः, इन्दीवरं नीलोत्पलम् ॥ ३३ ॥ रूपमङ्गान्यभूषितानीत्यादिना यल्लिखितं तदेव किमपि निर्वक्तुमशक्यं

---

तनोर्माधुर्यमुच्यते ॥ ३१ ॥ ३२ ॥ ३३ ॥ वधूनामिति सर्वत्रान्वेति । हृदयं कर्म-

---

१. 'इन्दीवरबन्धुरेषु' इति क. पुस्तके.

चटुलयति कुलस्त्रीधर्मचर्यां[1] बकारेः
सुमुखि नवविवर्तः कोऽप्यसौ माधुरीणाम् ॥ ३४ ॥

अथ मार्दवम्—

**मार्दवं कोमलस्यापि संस्पर्शासहतोच्यते ॥ ३५ ॥**
**उत्तमं मध्यमं प्रोक्तं कनिष्ठं चेति तत्त्रिधा ।**

तत्रोत्तमम्—

अभिनवनवमालिकामयं सा
शयनवरं निशि राधिकाधिशिश्ये ।
न कुसुमपटलं दरापि (?) जग्लौ
तदनुभवात्तनुरेव सव्रणासीत् ॥ ३६ ॥

---

चेयद्वाचकः शब्दो न लभ्यते किंतु मनसैवास्वाद्य प्रतीयते तन्माधुर्यं किमपीत्यादिशब्दैर्यथाकथंचिद्गम्यमित्यर्थः ॥ विशाखा श्रीराधामाह—किमपि धाम (कर्तृ) हृदयं (कर्म) रुन्धे । स्वस्मिन्नावृत्य स्थापयतीत्यर्थः । विलुण्ठति बलादपहरति । एवं च मनोदृशोभावे कथं धर्मः स्थास्यतीत्याह—चटुलयति चञ्चलीकरोति । विवर्तः परिपाकविशेषः ॥ ३४ ॥ ३५ ॥ रूपमञ्जरी रतिमञ्जरीमाह—**अभिनवेति** । तेनाद्यारभ्य नवमालिकायाः शय्या न कार्या किंतु यूथिकानां स्थलकमलानां वा दलाग्राणि किंवा तदर्थमन्यान्येव पुष्पाण्यवचेतुमन्वेष्टव्यानीति भावः । अधिशिश्ये । 'अधिशीङ्स्थासां कर्म' इत्याधारकर्मणि

---

रूपम् । धाम कर्तृरूपम् । बकारेर्माधुरीणां कोऽप्यसौ विवर्तः परिपाकः ॥ ३४ ॥ ॥ ३५ ॥ निशि राधिकाधिशिश्ये कृष्णेन सहेति बोध्यते । ततस्तस्यामार्दवलक्षणः स्वगुणोऽयं श्रीकृष्णभोग्यत्वेनानुभूयमान उद्दीपनाय कल्पते स इति भावः । वक्ष्यमाणमध्यमकनिष्ठोदाहरणे तु तां तां प्रति सखीवाक्यत्वात् पूर्ववदुद्दीपने जाते एवेत्येवमन्यत्रापि ज्ञेयम् । सव्रणेति स्नेहादत्युक्तिः । ग्लापितेत्येव वास्तवम् ॥ ३६ ॥

---

१. 'वधूनाम्' इति ख. पुस्तके पाठः.

मध्यमं यथा—

चित्रं धनिष्ठे तनुवाससोऽपि चीनस्य पीनस्तनि संगमेन ।
लिप्तेव ते लोहितचन्दनेन मूर्तिर्विदूना सखि लोहितासीत् ॥३७॥

कनिष्ठं यथा रससुधाकरे—

आमोदमामोदनमादधानं विलीननीलालकचञ्चरीकम् ।
क्षणेन पद्मामुखपद्ममासीत्त्विषा रवेः कोमलयापि ताम्रम् ॥३८॥

अथ नाम यथा—

तटभुवि रविपुत्र्याः पश्य गौराङ्गि रङ्गी
स्फुरति सखि कुरङ्गीमण्डले कृष्णसारः ।
इति भवदभिधानं शृण्वती सा मदुक्तौ
सुतनुरतनुघूर्णापूरपूर्णा बभूव ॥ ३९ ॥

---

प्रत्ययः ॥ ३६ ॥ ललिताह—**चित्रमिति** । चीनस्य चीनदेशोद्भवस्यातिसूक्ष्मस्य । लोहितचन्दनेन रक्तचन्दनेन ॥ ३७ ॥ पद्मायाः सखी स्वसखीमाह—आमोदं सौरभमामोदनमानन्ददायि आदधानमन्येभ्योऽप्यर्पयन्तम् । निलीनाः स्वेदसंपर्काद्भालोपान्तसंस्पृष्टा नीलालका एव चञ्चरीका भ्रमरा यत्र तत् । नन्वासां सदैव वस्त्रालंकारादिमतीनां दिवसेऽप्यभिसारवनविहारादौ सूर्यकिरणस्पर्शिनीनां मार्दवनिबन्धनवैवर्ण्यस्य सार्वदिकत्वे विभाववैरूप्यं प्रसज्जेत् । मैवम् । आसां प्रायः सदैव जागरूकरागाख्यस्थायिभाववतीनां दुःखमपि परमसुखरूपमेव भवेत् । तस्मिन् सति कुतो वैरूप्यं प्रत्युत सौरूप्यमेवाधिकं भवेत् । अत्र प्रमाणं 'तीव्रार्कद्युतिदीपितैः' इति वक्ष्यमाणं रागोदाहरणपद्यमेव । तत्र संतप्तसिकतापि परमसुकुमारचरणतलवैरूप्यालसमपि नाकरोत्; किमुत श्रीकृष्णदृष्टिसुखदत्वेनानुसंधीयमानानि वस्त्रालंकारादीनि । ततश्च कलहान्तरितत्वदशादावासां श्रीकृष्णसंबन्धसंभावनाभावाद्रागाख्यस्थायिभावानुद्गमसमय एव मार्दवनिबन्धनं वैवर्ण्यं ज्ञेयम् । अत एव मार्दवोदाहरणेषु श्रीकृष्णसंबन्धेनोपात्तमार्दवस्योत्तमत्वकनिष्ठत्वज्ञापनार्थं श्लोकत्रयम् । मार्दवस्य तारतम्यं तु स्पर्शनदर्शनादौ ज्ञेयमिति केचिदाचक्षते ॥ ३८ ॥ वृन्दा श्रीकृष्णमाह—**तटेति** ॥ ३९ ॥ अनुभावा

---

चीनस्य तन्नामदेशोद्भवस्य ॥ ३७ ॥ आमोदं सौरभम् । आमोदनमानन्दमम्

अथ चरितम्—

**अनुभावाश्च लीला चेत्युच्यते चरितं द्विधा ॥ ४० ॥**
**अग्रेऽनुभावा वक्तव्या लीलेयं कथ्यतेऽधुना।**
**लीला स्याच्चारुविक्रीडा ताण्डवं वेणुवादनम् ॥ ४१ ॥**
**गोदोहः पर्वतोद्धारो गोहूतिर्गमनादिका ॥**

तत्र चारुविक्रीडा—

**रासकन्दुकखेलाद्या चारुक्रीडात्र कीर्तिता ॥ ४२ ॥**

तत्र रासः—

तं विलासवति रासमण्डले पुण्डरीकनयनं सुराङ्गनाः।
प्रेक्ष्य संभृतविहारविभ्रमं बभ्रमुर्मदनसंभ्रमोर्मिभिः ॥ ४३ ॥

**कन्दुकक्रीडा—**

अरुणरुचिमुदस्य क्षेपणीं कुञ्चिताग्रां
सरभसमभिधावन्विभ्रमाद्दीर्घवेणिः।

---

अलंकाराख्याश्च ज्ञेयाः ॥ ४० ॥ ४१ ॥ ४२ ॥ श्यामला श्रीराधामाह—**तमिति**। हे विलासवति राधे, अत्र वर्ण्यमानत्वेन स्मृतो रासो रतेरुद्दीपनो ज्ञेयः ॥ ४३ ॥ वयस्यैः सह खेलन्तं श्रीकृष्णं लताजालदत्तनेत्रा पश्यन्ती श्रीराधा स्वसखीः प्रत्याह—अरुणरुचिं हिङ्गुलेन रञ्जितां क्षेपणीं कन्दुकोत्क्षेपणलकुटिकामुदस्य कन्दुकमुच्चालयितुमुत्क्षिप्य विभ्रमन्ती विभ्रमवती धावनेनाद्भुतविलासयुक्ता दीर्घा वेणिर्यस्य सः। कन्दुकान्दोलनेन नृत्यतोर्विपुलयोर्नयनयो-

---

॥ ३८ ॥ ३९ ॥ अनुभावा अत्रालंकाराख्या उद्भास्वराख्या वाचिकाख्याश्च ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ **अरुणरुचिमिति**। द्वयं कांचित् प्रति सख्या

विरचयति मुकुन्दः कन्दुकान्दोलनृत्य-
द्विपुलनयनभङ्गीविभ्रमः कौतुकं नः ॥ ४४ ॥

**ताण्डवम्**—

प्रचलप्रचलाककुण्डलोऽयं स्वसुहृन्मण्डलचर्चरीपरीतः।
हरिरद्य नटन्पतङ्गपुत्रीतटरङ्गे मम रङ्गमातनोति ॥ ४५ ॥

**वेणुवादनं** यथा ललितमाधवे—

जङ्घाधस्तटसङ्गि दक्षिणपदं किंचिद्विभुग्नत्रिकं
साचिस्तम्भितकंधरं सखि तिरःसंचारिनेत्राञ्चलम्।
वंशीं कुड्मलिते दधानमधरे लोलाङ्गुलीसंगतां
रिङ्गद्भ्रूभ्रमरं वराङ्गि परमानन्दं पुरः स्वीकुरु ॥ ४६ ॥

**गोदोहो** यथा पद्यावल्याम्—

अङ्गुष्ठाग्रिमयन्त्रिताङ्गुलिरसौ पादार्धनीरुद्धमू-
रापीनाञ्चलमार्द्रयन्निह पुरो द्वित्रैः पयोबिन्दुभिः।

---

भङ्ग्या विभ्रमः शोभाविशेषो यस्य सः ॥ ४४ ॥ लताजाले पश्यन्ती श्रीराधा सखीः प्राह—**प्रचलेति**। प्रचलाकः पिच्छम्। चर्चरी तालविशेषः ॥ ४५ ॥ ललिता श्रीराधामाह—**जङ्घेति**। परमानन्दं तदेकस्वरूपत्वेनाधाराधेयभेदशून्यम्। मूर्तमेव सुखमित्यर्थः। अङ्गीकुरु कटाक्षेङ्गितेन स्वीकुरु। कीदृशम्। जङ्घया वामजङ्घया सहाधस्तटेन स्वाधोभागेन सङ्गि दक्षिणपदं यस्य तम्। किंचिदीषद्विभुग्नं त्रिकं मध्यभागो यस्य तम्। 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः। साचि तिर्यक् स्तम्भिता स्तम्भभावेनैव निश्चला कंधरा ग्रीवा यस्य तम् ॥ ४६ ॥ विशाखा श्रीकृष्णं दर्शयन्ती श्रीराधामाह—अङ्गुष्ठस्याग्रिमोऽग्रभवो यो भागस्तेन यन्त्रिता सुश्लिष्टा अङ्गुलयो येन सः। तत्र भागशब्दस्य समासेऽन्तर्भावो वाच्यः। यदुक्तं

---

वचनम्। तेनावगतत्वाच्च तत्तल्लीलाया उद्दीपनत्वम् ॥ ४४ ॥ प्रचलाकः पिच्छम्। चर्चरी तालविशेषः ॥ ४५ ॥ **जङ्घाधस्तटेति**। दाम्पत्येन श्रीकृष्णप्राप्त्यु-

न्यग्जानुद्वयमध्ययन्त्रितघटीवक्रान्तरालस्खल-
द्धाराध्वानमनोहरं सखि पयो गां दोग्धि दामोदरः ॥४७॥

**पर्वतोद्धारः—**

उद्यम्य कन्दुकितमन्दरसोदराद्रिं
सव्यं करं कटिमनुस्थगयन्नसव्यम्।
स्मेराननश्चलदृगञ्चलचञ्चरीक-
श्चित्ताम्बुजं मम हरिश्चटुलीचकार[1] ॥ ४८ ॥

**गोहूतिः—**

पिशङ्गि मणिकस्तनि प्रणतशृङ्गि पिङ्गेक्षणे
मृदङ्गमुखि धूमले शबलि हंसि वंशीप्रिये।
इति स्वसुरभीकुलं मुहुरुदीर्णहीहीध्वनि-
र्विदूरगतमाह्वयन् हरति हन्त चित्तं हरिः ॥ ४९ ॥

---

भाषावृत्तौ "क्वचिदुत्तरपदस्य वृत्तावन्तर्भावः सुवर्णविकारोऽलंकारोऽस्य सुवर्णालंकारः" इति। आपीनमूधस्तस्याञ्चलम्। पुरः दोहक्रियायाः प्रथममेवेत्यर्थः। न्यक् किंचिदधोऽञ्चद्यज्जानुद्वयमूरुपर्वयुगलं तन्मध्ये यन्त्रिता निश्चलतया न्यस्ता या घटी तस्या यद्वक्रान्तरालं मुखमध्यं तत्र स्खलन्त्यः पतन्त्यो या धारास्तासां ध्वानेन मनोहरं यथा स्यात्तथा पयो गामिति कर्मद्वयम् ॥ ४७ ॥ श्रीराधा विशाखामाह—**उद्यम्येति**। कन्दुकितः क्रीडार्थमिव लीलयैव कन्दुकीकृतः मन्दरसोदरस्तत्तुल्योऽद्रिर्येन तं सव्यकरमुद्यम्योत्थाप्य तथा असव्यं दक्षिणकरं कटिमनु कट्यां स्थगयन् संवृततया स्थापयन्। 'षगे ष्टगे संवरणे' धातुः ॥ ४८ ॥ श्रीराधा ललितामाह—**पिशङ्गीत्यादि**। पद्यत्रयम्। रचितो धैर्यस्य संवरः संवृत्तिः। लोप इति यावत्। अम्बरमणेः सूर्यस्य प्रभाभिर्लग्नाभिरुज्ज्वलं अति-

---

पायसमये तदभेदेन श्रीराधायाः प्रतीतायाः प्रतिमाया वर्णनम् ॥ ४६ ॥ ४७ ॥ कन्दुकितः कन्दुकीकृतः। मन्दरसोदरस्तत्तुल्योऽद्रिर्येन तम्। सव्यं करमुद्यम्य,

---

1. 'चटुलं चकार' इति ग. पुस्तके.

गमनम्—

अनुपदमदमन्दान्दोलिदोरर्गलश्रीः
सुरगजगुरुगर्वस्तम्भिगम्भीरकेलिः ।
सहचरि दरचञ्चच्चारुचूडारुचिर्मां
मदयति गतिमुद्रामाधुरी माधवस्य ॥ ५० ॥

अथ मण्डनम्—

चतुर्धा मण्डनं वासोभूषामाल्यानुलेपनैः ।

तत्र वस्त्रं यथा—

अम्बरं चरितधैर्यसंवरं रम्यमम्बरमणिप्रभोज्ज्वलम् ।
सुभ्रु किं नहि कटीरमण्डले पुण्डरीकनयनस्य पश्यसि ॥ ५१ ॥

यथा वा—

अमलकमलरागरागमेतत्तव जयति स्फुटमद्भुतं दुकूलम् ।
मम हृदि निजरागमत्र राधे दधदपि यद्द्विगुणं बभूव रक्तम् ॥ ५२ ॥

---

चाकचिक्यवदित्यर्थः । अम्बरमिदं पीतमरुणं वा ज्ञेयम् ॥ ४९ ॥ ५० ॥ ५१ ॥ श्रीकृष्णः श्रीराधामाह—**अमलेति** । कमलरागः पद्मरागमणिस्तस्येव रागो रक्तिमा यस्य तत् । निजस्य रागं रक्तिमानं अनुरागं च दधदर्पयत् । **द्विगुणमिति** । अनुरागस्य स्वभाव एवायं यत् स्वविषयस्य नित्यनूतनीकरणेन प्रतिक्षणं

---

असव्यं करं कटिमनु स्थगयन् संवृततया स्थापयन् ॥ ४८ ॥ ४९ ॥ ५० ॥ दृष्टमपि वाम्येनादृष्टमिव ज्ञापयन्तीं कांचित् प्रति सख्यास्तत्तदङ्गवर्णनेष्वम्बरमित्याद्यपि वर्णनं ज्ञेयम् । किं न पश्यसीति स्वारस्यात् । संवरः संवरणम् । प्रारब्धाभा प्रभा मध्यपदलोपात्नवमुद्गतेत्यर्थः । **रम्यमि**त्यादौ प्रोद्यदम्बरमणिप्रभास्वरामिति वा पाठः ॥ ५१ ॥ कमलरागः पद्मरागमणिः द्विगुणं बभूव । **रक्तमिति** । स्वहृदयस्य रागातिशयो व्यञ्जितः । रागस्यानुरागवाचकत्वेऽपि स्वविषयोत्कर्षव्यञ्जकत्वाद्युक्त-

---

१. कटीरो जघनम्.

**भूषा यथा**—

प्रहरतु हरिणा कदम्बपुष्पं प्रियसखि शेखरितं यदङ्गजास्त्रम्।
बत कथममुनावतंसितोऽसौ मम हृदि विध्यति नीलकण्ठपक्षः ॥५३॥

यथा वा—

हारेण तारद्युतिना कपोलप्रेङ्खोलिना कुण्डलयोर्युगेन।
उत्तुङ्गभासा कनकाङ्गदेन मां लालितेयं ललिता धिनोति ॥ ५४ ॥

**माल्यानुलेपने** यथा रससुधाकरे—

आलोलैरनुमीयते मधुकरैः केशेषु माल्यग्रहः
कान्तिः कापि कपोलयोः प्रथयते ताम्बूलमन्तर्गतम्।
अङ्गानामनुभूयते परिमलैरालेपनप्रक्रिया
वेषः कोऽपि विदग्ध एष सुदृशः सूते मुखं चक्षुषोः ॥५५॥

---

शोभातिशयमनुभावयतीति ॥ ५२ ॥ श्रीराधा ललितामाह—**प्रहरत्विति**। शेखरितं शेखरीकृतम्। 'शिखास्वापीडशेखरौ' इत्यमरः। अङ्गजस्य कन्दर्पस्यास्त्रमिति तस्य पुष्पशरत्वान्मम च सदैव तल्लक्ष्यत्वात् प्रहरत्वित्युचितमेव नीलकण्ठस्य सदैव तद्विषयत्वेन प्रसिद्धस्य रुद्रस्य पक्षः सखा मम हृदि कथं विध्यति। 'पक्षः सखिसहाययोः' इति मेदिनी। नीलकण्ठः, पक्षे पक्षः मयूरपिच्छम्। 'नीलकण्ठो भुजङ्गभुक्' इत्यमरः ॥ ५३ ॥ श्रीकृष्णः पथि चलन्तीं ललितां वर्णयन् सुबलमाह—**हारेणेति**। तारो नाम मुक्तानां संशुद्धिर्गुणविशेषस्तेन द्युतिर्यस्य तेन। 'तारो मुक्तादिसंशुद्धौ तरले शुद्धमौक्तिके' इति विश्वः। ललिता हारादिभिरीप्सितीकृता। 'लल ईप्सायाम्' चुरादिः ॥ ५४ ॥ श्रीकृष्ण आह—

---

मेव तदित्यपि सूचितम् ॥ ५२ ॥ नीलकण्ठपक्षो मयूरपिच्छम्। नीलकण्ठो रुद्रः तस्याङ्गजविद्वेषित्वेन प्रसिद्धस्य पक्षः सहायोऽपीत्यर्थः ॥ ५३ ॥ **हारेणेत्याद्यपि**। हरिविषया या ललिता। रतेरुद्दीपनत्वं पूर्वरीत्या ज्ञेयम्। साक्षाद्वा परम्परया वा तया तादृशश्रीकृष्णवाक्यश्रुतेः। तारेण मुक्ता शुद्धा द्युतिर्यस्य तेन। लालिता सखीभिरुपसेविता ॥ ५४ ॥ **आलोलैरित्यपि**। पूर्ववत्। परपरत्र

यथा वा—

अनङ्गरागाय बभूव सद्यस्तवाङ्गरागोऽपि किमङ्गनासु ।

उद्दामभाराय तथा किमासीद्दामापि दामोदर तावकीनम् ॥५६॥

अथ **संबन्धिनः**—

**लग्नाः संनिहिताश्चेति द्विधा संबन्धिनो मताः ॥ ५७ ॥**

तत्र **लग्नाः**—

**वंशीशृङ्गीरवौ गीतं सौरभ्यं भूषणक्वणः ।**

**पदाङ्काद्या विपञ्च्यादिनिक्वाणाः शिल्पकौशलम् ॥ ५८ ॥**

**इत्यादयोऽत्र कथिता लग्नाः संबन्धिनो बुधैः ।**

तत्र **वंशीरवो** दानकेलिकौमुद्याम्—

वेणोरेष कलस्वनस्तरुलताव्याजृम्भणे दोहदं

संध्यागर्जभरः पिकद्विजकुहूस्वाध्यायपारायणे ।

---

केशेषु वस्त्राच्छादितेष्वपि माल्यग्रहो माल्यधारणं प्रथयते ख्यापयते ॥ ५५ ॥ दूती श्रीकृष्णमाह—**अनङ्गेति** । अङ्गरागश्चन्दनकुङ्कुमाद्यनुलेपः । तव दाम माल्यमपि उद्दामो विनिर्मलो यो भावस्तदर्थम्, विरोधपक्षे उदुपसर्गो नञर्थे । उद्वर्त्मना गच्छतीतिवत् ॥ ५६ ॥ गुणादयो मण्डनान्ता उद्दीपनविभावा नायकयोः साक्षाद्वर्तित्वे एव संबन्धिनस्तु तदसाक्षाद्वर्तित्वे इति भेदो ज्ञेयः । संबन्धिष्वपि तदविनाभाववन्तो वंशीरवाद्या लग्ना इति तौ विनापि पृथग्विधा निर्माल्यादयः संनिहिता इत्याख्यायन्ते । किं च वंशीरवादीनां तत्साक्षाद्वर्तित्वे गोहूतिर्गमनादिकेत्यादिपदग्राह्यत्वेन लीनेत्याख्या साक्षाद्वर्तित्वाभावे तु संबन्धिन इति । अत एव वेणुवादनताण्डवगोहूतयो लीलामध्येऽपि पठिता इति ॥ ५७ ॥ ५८ ॥ वृन्दा श्रीराधाप्रभृतीराह—**वेणोरिति** । व्याजृम्भणे पुष्पपल्लवादिप्रकाशे निमित्ते दोहदं तदानन्दकौषधविशेषः । तथा पिका एव द्विजास्तेषां कुहूरेव स्वाध्यायो

---

चावतारिकाभङ्ग्या तथैव योज्यम् ॥ ५५ ॥ **अनङ्गरागायेति** । तत्प्रेयस्याः पुरतः श्रीकृष्णं प्रति सखीकृतपरिहासवचनम् ॥ ५६ ॥ ५७ ॥ ५८ ॥ पारायणं

आभीरेन्दुमुखीसरानलशिखोत्सेके सलीलानिलो
राधाधैर्यधराधरेन्द्रदमने दम्भोलिरुन्मीलति ॥ ५९ ॥

यथा वा रससुधाकरे—

माधवो मधुरमाधवीलतामण्डपे पटुरटन्मधुव्रते ।
संजगौ श्रवणचारु गोपिकामानमीनबडिशेन वेणुना ॥ ६० ॥

**कृष्णवक्त्रेन्दुनिष्ठू(ष्ठ्यू)तं मुरलीनिनदामृतम् ।**
**उद्दीपनानां सर्वेषां मध्ये प्रवरमीर्यते ॥ ६१ ॥**

भृङ्गीरवः—

कंसारातेः पिबतु मुरली तस्य सद्वंशजन्मा
सा वक्त्रेन्दुं स्फुटमकुटिला पञ्चमोद्गारगुर्वी ।
आस्वाद्यामुं त्वमपि विषमाभङ्गुराङ्गारकाली
तुङ्गं शृङ्गि ध्वनसि यदिदं तत्तु दुःखाकरोति ॥ ६२ ॥

अथ **गीतम्**—

मानानलं मे शमयन्प्रसिद्धं गानामृतं वर्षति कृष्णमेघः ।
मा क्रुध्य वात्यासि सखि प्रसीद दूरे नयामुं निजविभ्रमेण ॥६३॥

---

वेदपाठस्तस्य पारायणे साकल्येनावर्तने । संध्यागर्जातिशयदम्भोलिर्वज्रम् ॥ ५९ ॥ अत्र राधाधैर्येत्यनेन श्रीराधाया एव भावोद्दीपनत्वं वेणुस्वनस्यावगतं विवक्षितं तु सर्वासामेव इत्यत आह—**यथावेति** । **माधव इति** । अत्र गोपिकापदेन नायिकामात्रमुक्तम् ॥ निष्ठू(ष्ठ्यू)तमुद्गीर्णम् ॥ ६० ॥ ६१ ॥ श्रीराधाह—**कंसेति** । विषमा स्थौल्येऽपि सर्वत्र सामान्यरहिता सा प्रसिद्धा यशस्विनी दुःखाकरोति दुःखं ददाति । 'दुःखात् प्रातिलोम्ये' इति डाच् ॥ ६२ ॥ कलहान्तरिता श्रीराधा ललितामाह—**मानेति** । शमयन् शमयितुं त्वं वात्या असि यतो मामेव चालयसि । त्वं किं न चालयसि यदि शक्नोषीति भावः ॥ ६३ ॥

---

पाठस्य साकल्यकरणम् । व्याजृम्भणे पुष्पादिप्रकाशे निमित्ते दोहदं वाञ्छनीयमित्यर्थः

**सौरभ्यम्—**

मिलति परिमलोर्मिः कस्य रोमश्रियासौ
मम तनुलतिकायां कुर्वती कुड्मलानि ।
सखि विदितमिहाग्रे माधवः प्रादुरासीद्
भुवि सुरभितया यः ख्यातिमङ्गीकरोति ॥ ६४ ॥

यथा वा—

मदयति हृदयं किमप्यकाण्डे मम यदिदं नवसौरभं वरीयः ।
तदिह कुसुमसंग्रहाय राधा शिखरितटे शिखरद्विजा विवेश ॥६५॥

**भूषणक्वणः—**

कलहंसनादमिह हंसगामिनी निशमय्य हंसदुहितुस्तटान्तरे ।
तव नूपुरध्वनिधिया परिप्लवा कलसीं न वेद शिरसश्च्युतामपि ॥६६॥

---

अभिसरन्ती श्रीराधा वनमध्य एवाह—**मिलतीति** । परिमलश्रीः सौरभसंपत्तिः । रोमश्रिया रोम्णामुद्गमशोभया इत्यर्थः । दध्ना उपासिक्त ओदनो दध्योदन इतिवदुद्गमपदस्य वृत्तावन्तर्भावः । प्रत्युत्तरमवदन्तीं ललितां स्वयमेवाह—हे सखि, विदितं मया सहसा ज्ञातं सुरभिर्वसन्तः, सौरभवांश्च श्रीकृष्णः । 'वसन्ते पुष्पसमयः सुरभिः' इत्यमरः ॥ ६४ ॥ श्रीकृष्ण आह—**मदेति** । 'पक्वदाडिमबीजाभं माणिक्यं शिखरं विदुः' ॥ ६५ ॥ वृन्दा श्रीकृष्णमाह—**कलेति** । परिप्लवा चञ्चला । 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यमरः । कलसीमिति । दास्यादिसद्भावेऽपि देवतापूजनार्थं कलसीं स्वयमेव वहामीति निमिषमात्रं यमुनातटं

---

॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ 'मिलति परिमलश्रीः कस्य वा रोममूले मम' इत्येव वा पाठः । सुरभितया सुगन्धितया, पक्षे वसन्ततया ॥ ६४ ॥ **मदयतीति** । कदाचिदभिसृत्यापि श्रीकृष्णं निकटस्थं वितर्क्य लीनतया शृण्वत्यां श्रीराधायां श्रीकृष्णवाक्यम् । अकाण्डेऽनवसरे । 'पक्वदाडिमबीजाभं माणिक्यं शिखरं विदुः' ॥ ६५ ॥ परिप्लवा चञ्चला । कलसीयं देवताराधनाय भक्त्यैव स्वयमूढा न तु परिजनाभावेन स्वगृहकर्मणे । तत आरभ्य नन्दस्येत्यादेः ॥ ६६ ॥

यथा वा ललितमाधवे—

मधुरिमलहरीभिः स्तम्भयत्यम्बरे या
स्मरमदसरसानां सारसानां रुतानि।
इयमुदयति राधा किंकिणीझङ्कृतिर्मे
हृदि परिणमयन्ती विक्रियाडम्बराणि॥ ६७॥

**पदाङ्काद्या** यथा दानकेलिकौमुद्याम्—

पदततिभिरलंकृतोज्ज्वलेयं ध्वजकुलिशाङ्कुशपङ्कजाङ्किताभिः।
नखरलुठितकुड्मला वनाली किमपि धिनोति धुनोति चान्तरं मे॥ ६८॥

---

गत्वा श्रीकृष्णं दूरादपि पश्येयमिति तु वास्तवम्॥ ६६॥ श्रीराधादिदृक्षुः श्रीकृष्णो वितर्कयति—**मधुरिमेति**। स्तम्भयति तिरस्करोति। परिणमन्ती परिपाकं प्रापयन्ती॥ ६७॥ श्रीराधाह—इयं वनाली वनश्रेणी वनरूपाली च ध्वजादिभिरङ्किताभिः पदततिभिः। अत्र पदशब्देन पदचिह्नं लक्षितव्यम्। पक्षे चिह्नश्रेणीभिरलंकृता तेन श्रीकृष्णेनैवेत्यर्थतो गम्यते। नखराणां लुठितं स्पर्शो येषु तथाभूतानि कुड्मलानि यस्याः सा। 'लुठ (ट) संश्लेषणे' तुदादिः। श्रीकृष्णेनैव स्वपाणिना पुष्पावचये तन्नखरस्पर्शात्। पक्षे नखरेषु लुठितं कुड्मलं अतिशयोक्त्या स्तनो यस्याः सा इति विपरीतशृङ्गारः सूचितः। अत्र वनपक्षे धिनोति सुखयति तदीयचरणनखरचिह्नदर्शनात्, धुनोति कम्पयति साक्षात्तद्दर्शनोत्कण्ठाव्यथोत्पादनात्। आलीपक्षे श्रीकृष्णसंभुक्ता सखी स्निह्यन्तीं मां सूचयति, विपरीतसंभोगचिह्नयुक्ता सा कम्पयति। तद्दर्शनेन कामोद्गमात्॥ ६८॥ श्रीकृष्णः

---

कदाचिददूरवर्तिनीमपि श्रीराधामविलोक्य तस्यां शृण्वत्यां श्रीकृष्णः प्राह—**मधुरिमेति**। परिणमयन्ती परिपाकं प्रापयन्ती। लुठितत्वं स्खलितत्वम्॥ ६७॥ **स्मरकेलीत्यपि**। मधुरिमेत्यादिसहोदरम्। शब्दब्रह्मश्रियं शब्दरूपं ब्रह्म वेदाख्यं तस्य संपत्तिरूपतया वितर्क्यमानायास्तादृशीं स्मरकेलिनाट्यनान्दीं आरम्भत एव मङ्गलपाठं, दुहन्ती प्रपूरयन्ती। महती विपञ्चीनाम वीणाभेदः

**विपञ्चीनिक्वाणो** यथा ललितमाधवे—

स्मरकेलिनाट्यनान्दीं शब्दब्रह्मश्रियं मुहुर्दुहती ।
वहति मुदं मम महतीमिह महिता श्यामलामहती ॥ ६९ ॥

**शिल्पकौशलं** यथा—

वरकुसुमनिवेशप्रक्रियासौष्ठवेन
प्रकटितहरिशिल्पा पट्टसूत्रोज्ज्वलश्रीः ।
हृदि विनिहितकम्पा निर्मिमीते स्रगेषा
निशितशरपरीतस्मारतूणीरशङ्काम् ॥ ७० ॥

अथ **संनिहिताः**—

**निर्माल्याद्याः संनिहिता बर्हगुञ्जाद्रिधातवः ॥ ७१ ॥**
**नैचिकीनां समुदयो लगुडीवेणुशृङ्गिकाः ।**
**तत्प्रेष्ठदृष्टिर्गोधूलिर्वृन्दारण्यं तदाश्रिताः ॥ ७२ ॥**
**गोवर्धनो रविसुता तथा रासस्थलादयः ।**

तत्र **निर्माल्याद्या** यथा विदग्धमाधवे—

अङ्गोत्तीर्णविलेपनं सखि समाकृष्टिक्रियायां मणि-
र्मन्त्रो हन्त मुहुर्वशीकृतिविधौ नामास्य वंशीपतेः ।

---

श्यामलां दिदृक्षुराह—**स्मरेति** । श्यामलाया महती वीणा महतीं मम मुदं वहति । 'वीणाभेदेऽपि महती' इत्यमरः । शब्दरूपं यद्ब्रह्म वेदस्तस्य श्रियं संपत्तिं दुहती प्रपूरयन्ती । कीदृशीं । स्मरकेलिरेव नाट्यं तस्य नान्दीमारम्भसूचकमङ्गलपाठरूपाम् ॥ ६९ ॥ श्रीकृष्णेन केनचित् वनदेवताया हस्तेन प्रेषितां मालां विलोक्य श्रीराधा वितर्कयति—**वरेति** । हृदि विनिहितेति । 'हृद्द्युभ्यां ङेरलुक्' इति अलुक्समासः । स्मारस्य स्मरसंबन्धिनस्तूणीरस्य निषङ्गस्य शङ्कां

---

॥ ६८ ॥ ६९ ॥ ७० ॥ **अथ संनिहिता इति** । अत्र संनिहितजातीया अप्युपलक्ष्याः । बर्हादिमात्रदर्शनेनावेशसंभवात् ॥ ७१ ॥ ७२ ॥ आसामङ्गो-

निर्माल्यस्रगियं महौषधिरिह स्वान्तस्य संमोहने
नासां कस्तिसृणां गृणाति परमाचिन्त्यां प्रभावावलीम् ॥७३॥

यथा वा ललितमाधवे—

दुकूलेऽस्मिन्कार्तस्वरमहसि विस्तारितदृशो
वपुः किं ते फुल्लैर्वहति तुलनां नीपकुसुमैः ।
त्रुटन्तीभिः किं वा स्फटिकमणिमालाभिरुपमां
लभन्तेऽमी क्षामोदरि नयनयोस्तोयपृषताः ॥ ७४ ॥

अथ बर्हगुञ्जे यथा विदग्धमाधवे—

अग्रे प्रेक्ष्य शिखण्डखण्डमचिरादुत्कम्पमालम्बते
गुञ्जानां तु विलोकनान्मुहुरसौ सास्रं परिक्रोशति ।
नो जाने जनयन्नपूर्वनटनक्रीडाचमत्कारितां
बालायाः किल चित्तभूमिमविशत्कोऽयं नवीनग्रहः ॥७५॥

---

भ्रमम् ॥७०॥७१॥७२॥ श्रीराधा विशाखामाह—अङ्गादुत्तीर्णं विलेपनं चन्दनाद्यङ्गरागः। आसां अङ्गोत्तीर्णविलेपननामनिर्माल्यस्रजां तिसृणां क्रमान्मणिमन्त्रमहौषधीनां को न गृणाति न कथयति । अत्र नामशब्दस्य नपुंसकत्वात् 'नपुंसकमनपुंसकेन' इत्यादिनैकशेषादेषामित्येव भवति नत्वासामिति । सत्यम् । तदप्यत्रोद्देश्यानामन्ते स्रक्पदस्य विधेयानामन्ते ओषधिपदस्य स्त्रीत्वादिदमादिशब्दानामव्यवहितप्रक्रान्तपरामर्शात् क्रमभङ्गस्य काव्यार्थविघातकत्वात् बौद्धापादानवद्बौद्धो द्वन्द्व एव विलेपननामस्रजामिति मणिमन्त्रमहौषधीनामित्याकारोऽत्रासामितिपदेन बोधयितव्य इति काव्यज्ञानामेव न तु केवलवैयाकरणानां व्युत्पत्तिः । वंशीपतेरित्येकारं (?) वंशी एवास्य स्वकीया स्त्री परकीयनारीणामानयने दूती । अन्यच्चोक्तलक्षणमुपायत्रिकं च प्रबलमतो ममापि मनोरथसिद्धिः स्वत एव संभाव्यत इति भावः ॥ ७३ ॥ ललितमाधवस्थनववृन्दावनीयकथायामपरिचीयमानां श्रीराधां चन्द्रावली पृच्छति—**दुकूले इति** । कार्तस्वरं सुवर्णम् । पृषता बिन्दवः ॥ ७४ ॥ मुखरा श्रीराधाचेष्टितं पौर्णमासीमावेदयति—**अग्र इति** । विरहिणी

---

त्तीर्णविलेपननामनिर्माल्यस्रजाम् । को न गृणाति न कथयति ॥ ७३ ॥ तोयपृषताः

**अद्रिधातुर्यथा—**

आभीरवृन्दाधिपनन्दनस्य कलेवरालंकरणोज्ज्वलश्रीः ।
क्षिप्तेन्द्रगोपांशुरपांशुलोऽयं तनोति रागं मम धातुरागः ॥ ७६ ॥

**नैचिकीसमुदयो** यथा—

संध्याद्योते विलसति गताः प्रेक्ष्य गोष्ठप्रकोष्ठे
हम्बारम्भोन्मुखरितमुखीर्नैचिकीस्त्वद्विहीनाः ।
अन्तश्चिन्ताचुलुकितमतिर्यादवेन्द्राद्य मन्दा
कष्टं चन्द्रावलिरिह कथं प्राणबन्धं करोतु ॥ ७७ ॥

**लगुडी** यथा—

विष्टभ्य यां भुवि पुरः शिखरार्पितेन
विन्यस्तचारुचिबुकेन करद्वयेन ।
दीव्यन्हरिर्गिरितटे मुदमादधान्नः
सा हन्त यष्टिरधुना हृदयं पिनष्टि ॥ ७८ ॥

---

श्रीराधा गोवर्धनस्थं गैरिकमालोक्याह—**आभीरेति** । क्षिप्तस्तिरस्कृत इन्द्रगोपस्य वर्षोद्भवकीटविशेषस्यांशुः किरणो येन स अपांशुलोऽमलिनः । रागं तद्दर्शनतृष्णाम् ॥ ७६ ॥ मथुरास्थं श्रीकृष्णं केनचित् पान्थेन पद्मा संदेशं प्रस्थापयति—संध्याया द्योते प्रकाशे गोष्ठस्य प्रकोष्ठे निकटप्रदेशविशेषे । हे यादवेन्द्रेति । गोपेन्द्रवंशजात, त्वं यादवेन्द्रोऽभूः कथमस्मान् गोपीः स्मरिष्यति । धिक् दुरदृष्टमस्माकमिति भावः ॥ ७७ ॥ मथुरां प्रस्थिते श्रीकृष्णे काचिद्गोपी विलपति—यां यष्टिं पुरो भुवि विष्टभ्य आलम्ब्य शिखरे यदग्रे अर्पितेन उपर्युपरि मुष्टीभूततया वा अनुत्तानतलतया वा करद्वयेन दीव्यन् ॥ ७८ ॥ मथुरास्थं

---

जलबिन्दवः ॥ ७४ ॥ ७५ ॥ अपांशुलत्वममलिनत्वम् ॥ ७६ ॥ ७७ ॥

वेणुर्यथा—

हृदि न्यस्ता वंशी त्वदधरसुधाभागिति मया
दुरन्तं विश्लेषज्वरगरलमस्याः शमयितुम्।
वितेने सा तूर्णं शतगुणमिदं यादवपते
विरक्तो यत्रेशस्तमिह नहि वा कः प्रहरति ॥ ७९ ॥

शृङ्गिका यथा—

वलितं विलोचनाग्रे शबलं धूलिभिरिदं बलावरज।
बलवत्कुवलयनयनास्तव गवलं कवलयत्यद्य ॥ ८० ॥

तत्प्रेष्ठदृष्टिर्यथा—

सखि मृगमदलेखया विशाखा हृदि मकरीरपि राधिका लिखन्ती।
सुबलमवकलय्य घूर्णिताग्रे पुलकवती वनमालिनं लिलेख ॥ ८१ ॥

---

श्रीकृष्णं प्रति ललिता संदेशं हंसद्वारा प्रेषयति—**हृदीति**। अस्याः श्रीराधाया हृदय एव यतो विरहविषज्वाला अतो हृदय एव वंशी अर्पिता। अस्यां त्वदधर-सुधायाः स्थितत्वात् सुधायाश्च विषदाहशमकत्वप्रसिद्धेः। किं चासौ मत्कृतोपायो विपरीतोऽभूदित्याह—सा वंशी इदं विश्लेषज्वरगरलं शतगुणं वितेने। अत्रा-र्थान्तरन्यासेन युक्तिमुत्थापयति—यत्र ईषत् प्रभुर्विरक्तो भवेत् तत्र प्रभुसंबन्धी को वा जनो न प्रहरति अपि तु सर्व एव। यतो वंशीविवरस्था त्वदधरसुधापि मात्सर्येणास्या विषं वर्धयति ॥ ७९ ॥ व्रजात् पुनर्मथुरां गत उद्धवः शृङ्गवेत्रादि-वार्तां पृच्छन्तं श्रीकृष्णमाह—वलितं व्याप्तं गवलं माहिषं शृङ्गं (कर्तृ) कुवल-यनयनाः कर्मभूताः कवलयति। **शबलं धूलिभिरिति**। एतावन्तं कालं त्वद्व्यवहाराभावादुत्तमस्थानस्थापितमपीत्यर्थः ॥ ८० ॥ रूपमञ्जरी सखीमाह—

---

॥ ७८ ॥ ७९ ॥ गवलमत्र वनमहिषशृङ्गम्। उपलक्षणं चैतत् खड्गादिशृङ्गाणाम्

---

१. 'पुरुषोत्तमम्' इति ख पुस्तके पाठः.

यथा वा ललितमाधवे—

निखिलसुहृदामर्थारम्भे विलम्बितचेतसो
मसृणितशिखो यः प्राप्तोऽभून्मनाङ् मृदुतामिव ।
स खलु ललितासान्द्रस्नेहप्रसङ्गघनीभवन्
पुनरपि बलादिन्धे राधावियोगमयः शिखी ॥ ८२ ॥

**गोधूलिर्यथा** उद्धवसंदेशे—

आ प्रत्यूषादपि सुमनसां वीथिभिर्ग्रथ्यमाना
धत्ते नासौ सखि कथमहो वैजयन्ती समाप्तिम् ।
धिन्वन् गोपीनयनशिखिनो व्योमकक्षां जगाहे
सोऽयं मुग्धे निबिडधवलाधूलिचक्राम्बुवाहः ॥ ८३ ॥

---

**सखीति** ॥ ८१ ॥ श्रीकृष्णो मधुमङ्गलमाह—निखिलसुहृदां वसुदेवोग्रसेनादीनां ये अर्था जरासन्धाद्युपद्रवशान्तिपूर्वकस्वस्वाधिकारसुस्थिरीकरणादीनि तेषामारम्भे विलम्बितमावेशितं चेतो येन तस्य मम यो राधावियोगाग्निर्मसृणितशिखाश्चित्तै-काग्र्याभावात् किंचिन्मन्दीभूताग्रः सन् मृदुतामिव प्राप्तोऽभूत् स खलु ललिताया यः सान्द्रः स्नेहः प्रेमपरिपाकः, पक्षे घृतादिरसस्तत्प्रसङ्गेन घनीभवन् हन्त हन्त यस्याः सखीयं ललिता सा मे क्व गतेति निबिडीभवन्। शिखी अग्निः ॥ ८२ ॥ पद्मा चन्द्रावलीमाह—**आ प्रत्यूषादिति**। शिखिनो मयूरान्। व्योमकक्षा-

---

॥ ८० ॥ ८१ ॥ **निखिलसुहृदामिति** । तत्र ललितमाधवे खल्वितिहा-सोऽयम् । ललिता नाम व्रजदेव्येव जाम्बवती योगमायया तस्या एव व्रजे जाम्बवद्गृहे च योगमायया तस्या एव व्रजे जाम्बवद्गृहे च संचारणात् कन्यात्वेन रक्षणाच्च। सा च स्यमन्तकाहरणे[1] कृष्णाय जाम्बवता दत्ता। पुर्ववत् श्रीराधैव योगमायया सत्यभामाख्यत्वेन सत्राजिद्गृहे[2] प्रापिता श्रीकृष्णेन प्रथममभिज्ञाता नासीत्। तत्र सति श्रीकृष्णस्य ललिताप्राप्तौ सत्यां तद्विरहं वर्णयतीति ज्ञेयम्। यदिदं च स्थायिप्रकरणे विरोधं परिहृत्य प्रमापयिष्यामः। तदेवं ललिताया अपि

---

१. 'मणिः स्यमन्तको हस्ते' इति हेमचन्द्रः. २. सत्राजित् सत्यभामा.

वृन्दारण्यं यथा तत्रैव—

आशापाशैः सखि नवनवैः कुर्वती प्राणबन्धं
जात्या भीरुः कति पुनरहं वासराणि क्षयिष्ये ।
एते वृन्दावनविटपिनः स्मारयन्तो विलासा-
नुत्फुल्लास्तान्मम किल बलान्मर्म निर्मूलयन्ति ॥ ८४ ॥

तदाश्रिताः—

**तदाश्रिताः खगा भृङ्गा मृगाः कुञ्जा लतास्तथा ।**
**तुलसी कर्णिकारश्च कदम्बाद्याश्च कीर्तिताः ॥ ८५ ॥**

तत्र **खगा** यथा ललितमाधवे—

कस्तान्पश्यन्भवदुपहृतस्निग्धपिच्छावतंसान्
कंसाराते न खलु शिखिनः खिद्यते गोष्ठवासी ।
उन्मीलन्तं नवजलधरं नीलमद्यापि मत्वा
ये त्वामन्तर्मुदितमतयस्तन्वते ताण्डवानि ॥ ८६ ॥

**भृङ्गा** यथा—

वृन्दावने श्रवसि ये निनदं विपञ्ची-
निष्ठ्यूतपञ्चममनोहरमाहरन्तः ।

---

माकाशप्रदेशम् । अम्बुवाहो मेघः ॥ ८२ ॥ ८३ ॥ माथुरविरहवती श्रीराधा विलपति—**आशेति** । अद्य श्व इति कृत्वा कति वासराणि व्याप्य क्षयिष्ये, प्राणबन्धं तद्रूपं महाकष्टं सहिष्ये । किं चान्यां विपत्तिं शृणु । **एत इति** । उत्फुल्लाः सन्तः ।ताननुभूतचरान् वनविहारकुसुमकेल्यादीन् ॥ ८४ ॥ ८५ ॥ पौर्णमासी द्वारकास्थं श्रीकृष्णमाह—**कस्तानिति** ॥ ८६ ॥ विरहिणी श्रीराधाह—**वृन्दावन इति** । विपञ्च्या वीणाया निष्ठ्यूतो निर्गतो यः पञ्चमः स्वरभेदस्त-

---

स्वस्वरूपप्रेष्ठजनस्य जाम्बवतीरूपस्य श्रीकृष्णसान्निध्यं प्राप्तस्य दर्शनेन स्वसख्याः श्रीराधाया विप्रलम्भस्मरणमधिकृष्णमुद्दीप्यते स्म । राधायाः स्मरणेन तस्याः संभोगसुखमपि तिरस्क्रियते । किं त्वायत्यामुभयोरपि सहचर्योः पारदार्यभ्रममयविप्रलम्भो दाम्पत्यमयं संभोगमुद्दीपयिष्यतीति भावः ॥ ८२ ॥ ८३ ॥ ८४ ॥

ये षट्पदाः कुलिशघट्टनघोरमेतं
दैवे विरोधिनि भवन्ति न के विपक्षाः ॥ ८७ ॥

**मृगा** यथा तत्रैव—

हरि हरि भवतीभिः स्वान्तहारी हरिण्यो
हरिरिह किमपाङ्गातिथ्यसङ्गी व्यधायि ।
यदनुरणितवंशीकाकलीभिर्मुखेभ्यः
सुखतृणकवला वः सामिलीढाः स्खलन्ति ॥ ८८ ॥

**कुञ्जा** यथा उद्धवसंदेशे—

लब्धान्दोलः प्रणयरभसादेष ताम्रोष्ठि नम्रः
प्रम्लायन्तीं किमपि भवतीं याचते नन्दसूनुः ।
प्रेमोद्दामप्रमदपदवीसाक्षिणी शैलकक्षे
द्रष्टव्या ते कथमपि न सा माधवीकुञ्जलेखा ॥ ८९ ॥

---

स्मादपि मनोहरं निनदं शब्दं कुलिशस्य वज्रस्य घट्टनं निपातस्तस्मादपि घोरं निनदं संप्रत्याहरन्तीत्यर्थः ॥ ८७ ॥ तत्रैव ललितमाधवे श्रीवृन्दावनेश्वरी माथुरविवाहोन्मादेन श्रीकृष्णमन्वेषयन्ती प्राह—**हरिहरीति खेदे** । सुखरूपास्तृणकवलास्तृणग्रासाः सामिलीढा अर्धनिगीर्णा अपि ॥ ८८ ॥ श्रीकृष्ण उद्धवद्वारा श्रीराधां प्रति संदेशं प्रेषयति—**लब्धान्दोल इति** । प्रणयरभसात् तद्विषयकप्रणयवेगात् लब्धान्दोलनः प्राप्तवैयग्र्यः । शैलकक्षे गोवर्धनप्रदेशे किं वा तत्रत्यारण्ये । कक्षोऽरण्ये च वीरुधि' इति धरणिः । कुञ्जानां लेखा श्रेणी न द्रष्टव्येति सा तांस्तान् विलासांस्तां स्मारयन्ती ते दशमीं दशां प्रापयिष्यन्तीति भावः

---

॥ ८५ ॥ ८६ ॥ ८७ ॥ सामि लर्धे ॥ ८८ ॥ **लब्धान्दोल इति** । श्रीराधां प्रति श्रीकृष्णसंदेशः । शैलकक्षे पर्वतारण्ये । 'कक्षः स्मृतो भुजामूले कक्षोऽरण्ये

**लतादिर्यथा**—

तुलसि विलससि त्वं मल्लि जातासि फुल्ला
स्थलकमलिनि भृङ्गैः संगताङ्गी विभासि।
कथयत बत सख्यः क्षिप्रमस्मासु कस्मिन्
वसति कपटकन्दः कन्दरे नन्दसूनुः॥ ९० ॥

**कर्णिकारो** यथा ललितमाधवे—

रासात्तिरोहिततनुः सखि यस्य पुष्पै-
श्चूडां चकार चिकुरे मम पिच्छचूडः।
कूले कलिन्ददुहितुर्धृतकन्दलोऽयं
मां दन्दहीति स मुहुर्नवकर्णिकारः॥ ९१ ॥

**कदम्बो** यथा—

सखि रोपितो द्विपत्रः शतपत्राक्षेण यो व्रजद्वारि।
सोऽयं कदम्बडिम्भः फुल्लो वल्लभवधूस्तुदति॥ ९२ ॥

**गोवर्धनो** यथा ललितमाधवे—

गोवर्धन त्वमिह गोकुलसङ्गिभूमौ
तुङ्गैः शिरोभिरभिपत्य नभो विभासि।
तेनावलोक्य हरितः परितो वदाशु
कुत्राद्य बल्लवमणिः खलु खेलतीति॥ ९३ ॥

---

॥ ८९ ॥ पूर्ववदेव श्रीवृन्दावनेश्वरी प्राह—**तुलसीति** ॥ ९० ॥ नववृन्दावने भ्रमन्ती विहरन्ती श्रीराधा विलपति—**रासादिति**। धृतकन्दलो जातपूर्वाङ्कुरः ॥ ९१ ॥ माथुरविरहिणी काचिदाह—**सखीति** ॥ ९२ ॥ विरहोन्मादेन श्रीकृष्णमन्वेषन्ती श्रीराधा पृच्छति—**गोवर्धनेति**। शिरोभिः शृङ्गैर्नभः स्वर्गं

---

च वीरुधि'। इति धरणिकोषात् ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥

**रविसुता** यथा पद्मावल्याम्—

मधुरापथिक मुरारेरुपगेयं द्वारि बल्लवीवचनम् ।
पुनरपि यमुनासलिले कालियगरलानलो ज्वलति ॥ ९४ ॥

**रासस्थली** यथा—

गोष्ठादप्यवलोक्य मानशिखरोच्छ्रायश्रिया दूरतः
सद्यः खेदिनि चित्तचत्वरतटे वंशीवटेनार्पिता ।
कुर्वाणा हृतवृत्तिमिन्द्रियगणं सा यादवेन्द्राद्य ते
कष्टं रासविहारभूर्विहरति प्राणैः कुरङ्गीदृशाम् ॥ ९५ ॥

---

संस्पृश्य हरितो दिशः ॥ ९३ ॥ श्रीराधायाः सखी काचित् संदिशति—**मधुरेति । यमुनासलिल इति ।** पूर्वं कालियह्रद एवं संप्रति यमुनाजलमात्र एवेति विशेषश्च ध्वनितः ॥ ९४ ॥ गोष्ठान्मथुरां पुनर्गत उद्धवो रासस्थलीं पृच्छन्तं श्रीकृष्णं प्रत्याह—**गोष्ठादिति ।** हे यादवेन्द्र, संप्रति यादवानां सुखदायिन्, सा तव रासभूः कुरङ्गीदृशां प्राणैः सह विहरती तदानीं कुरङ्गीदृग्भिरेव सह विहरन्त्यासीत् या सैवेयं तासां देहात् प्राणान्निष्काश्य तैरिति । ननु तास्त्वद्विरहखिन्ना गोष्ठ एव रासभूस्ततोऽतिविदूरे कथं तया सह तासां समागमस्तत्राह—वंशीवटेन ( कर्त्रा ) चित्तचत्वरतटे सा रासभूरर्पिता । प्राणनिष्क्रमणार्थमिति भावः । केन प्रकारेणेत्यपेक्षायामाह—गोष्ठान्नन्दीश्वरादप्यवलोक्यमाना शिखरोच्छ्रायश्रीः अग्रविस्तारशोभा यस्य तेन रासभूतटवर्तिनो वंशीवटस्यैवानर्थकारित्वं यतः स तासां नेत्रेषु प्रविश्य हृदयमध्ये रासभुवमानीय तद्द्वारा प्राणान् निष्क्रमयामासेत्यर्थः ॥ आदिशब्देन लीलातल्पादिकमपि ज्ञेयम् । यथा—'शून्यक्रीडानिबिडकमलैः कल्पिता तल्पवेदी नेदीयस्यास्तनुलहरिभिः शीलिता हेण(लि)पुत्र्याः । अङ्गज्वालापरिचयमिलन्मुर्मुरा मर्मदुःखव्याख्यापज्ञी मम धियमियं

---

लोकप्रसिद्धवंशीवटनामा कश्चिद्वटो वृन्दावने स्थितः । मुहुः प्राणैः सह विहरतीति प्राणैर्मम क्रीडतीति श्रीगीतगोविन्दवत् प्रयोगः । मुहुः प्राणाकर्षरूपां क्रीडां

अथ तटस्थाः—

तटस्थाश्चन्द्रिकामेघविद्युतो माधवस्तथा ॥ ९६ ॥
शरत्पूर्णसुधांशुश्च गन्धवाहखगादयः ।

तत्र **चन्द्रिका** यथा रससुधाकरे—

दुरासदे चन्द्रिकया सखीगणैर्लतालिकुञ्जे ललिता निगूहिता ।
चकोरचञ्चुच्युतकौमुदीकणं कुतोऽपि दृष्ट्वा भजति स्म मूर्च्छनाम् ॥ ९७ ॥

**मेघो** यथा रससुधाकरे—

वासः पीतं कुतुकिनि कुतः कुत्र बर्हं मदान्धे
कंसारिर्वा क नु सखि मुधा संभ्रमान्मा प्रयाहि ।
पश्योत्तुङ्गे क्षणरुचिघटालिङ्गितः शैलशृङ्गे
नव्यः शार्ङ्गं दधदुदयते कार्मुकं वार्मुगेषः ॥ ९८ ॥

**विद्युद्यथा** रससुधाकरे—

वर्षासु तासु क्षणरुक्प्रकाशाद्गोपाङ्गना माधवमालिलिङ्ग ।
विद्युच्च सा वीक्ष्य तदङ्गशोभां ह्रीणेव तूर्णं जलदं जगाहे ॥ ९९ ॥

---

'धूम्रयन्ती धुनोति' ॥ ९५ ॥ तटस्थाः साधारणा इत्यर्थः ॥ ९६ ॥ ललितायाः सखी कांचित्पृच्छन्ती तद्वृत्तान्तमाह—दुरासदे चन्द्रिकाया दुष्प्रापे स्थले निगूहिता संगोप्य रक्षिता। विरहिण्यास्तस्याः प्राणरक्षणार्थमिति भावः। तत्रैव लतापत्ररन्ध्रेण केनचिदायान्तं ज्योत्स्नाकणमुत्प्रेक्षते—**चकोरेति** ॥ ९७ ॥ हन्त हन्त गोवर्धनशृङ्गे पीताम्बरः पिच्छावतंसो मां दिधीर्षन्नेवास्ति तदहमग्रे न गच्छामीति विवर्तितमुखीं श्रीराधां ललिताह—**वास इति**। हे कुतुकवति, निरन्तरमेव श्रीकृष्णेन समं विलासार्थिनी तं ध्यायन्ती तमेव सर्वत्र पश्यसीत्यर्थः। क्षणरुचिर्विद्युत्। वार्मुक् मेघः ॥ ९८ ॥ नक्तंतनं वृत्तान्तं वृन्दा नान्दीमुखीमाह—**वर्षास्विति**। **माधवमालिलिङ्गेति**। अनावृतं मदङ्गविशेषं श्रीकृष्णो मा पश्यत्विति। लज्जयेवेत्यर्थः। विद्युतश्च तत्काल एवान्तर्धाने कारण-

---

करोतीत्यर्थः ॥ ९५ ॥ ९६ ॥ चकोरचञ्चुच्युतमिव कौमुदीकणमित्यर्थः ॥ ९७ ॥ ॥ ९८ ॥ **ह्रीणेवेति**। अत्र इवशब्द उत्प्रेक्षाद्योतकः। ततश्च वीक्ष्येत्यादावन्वितः ॥ ९९ ॥ **विद्युदिति**। अत्र क्षणरुगित्येव वक्तव्यम्। वर्षासु विद्युद्वलय-

**वसन्तो** यथा—

ऋतुहतकः सखि भुवने किमवतितीर्षुर्बभूवाद्य ।
मन्दादरमलिवृन्दं वृन्दावनकुन्दसंगमे यदभूत् ॥ १०० ॥

**शरद्यथा**—

कलहंसोज्ज्वलजल्पा प्रकटितवृन्दावनोरुमाधुर्या ।
धृतिमपहर्तुं सखि मे दूतीव हरेः शरन्मिलिता ॥ १०१ ॥

**पूर्णसुधांशुर्यथा**—

राकासुधांशुरभवन्न तमांसि हर्तुं
वृन्दाटवीजठरगाण्यधुनापि शक्तः ।
राकासुधांशुमुखि तानि तवोन्नतानि
हृत्कन्दरान्तरचराणि कथं जहार ॥ १०२ ॥

**गन्धवाहो** यथा श्रीगीतगोविन्दे—

मनोभवानन्दन चन्दनानिल प्रसीद रे दक्षिण मुञ्च वामताम् ।
क्षणं जगत्प्राण विधाय माधवं पुरो मम प्राणहरो भविष्यसि ॥ १०३ ॥

---

मुत्प्रेक्ष्यते । ह्रीणेव लज्जितेव ॥ ९९ ॥ काचिद्विरहिण्याह—ऋतुहतकः ऋतुनामा हतकः । निर्विवेक इत्यर्थः ॥ १०० ॥ सैव शरदं वर्णयति—कलहंस्येव कलहंसानां च ॥ १०१ ॥ विशाखा कलहान्तरितां श्रीराधामाह—**राकेति** । तानि मानरूपाणि तमांसि हे राकासुधांशमुखीति । त्वन्मुखमाधुर्येणैवानुमीयत इति भावः ॥ १०२ ॥ विप्रलब्धा श्रीराधिका विलपति—मनोभवं कन्दर्पमानन्दयसि तच्छरलक्ष्यभूताया मम प्राणाकर्षणेन तत्साहाय्यकरणात् । हे चन्दनानिल, किमिति न शिशिरयसीति भावः । नन्वहं संप्रति मनोभवराजसेवकः स

---

प्रकाशादित्येव पठनीयम् ॥ १०० ॥ १०१ ॥ तानि तमांसि मानरूपाणि दुःखानि । राकासुधांशुमुखीति संबोधनं संदेहमेव द्विगुणयति । यस्या ईदृशं मुखं तस्या हृदि तम एव न संगच्छत इत्यभिप्रायात् ॥ १०२ ॥ १०३ ॥

**खगा** यथा—

मानेन सार्धं पशुपालसुभ्रुवां मरालमाला चलिता घनागमे।
कदम्बकुञ्जे विजिहीर्षया समं समागता नागरि चातकावली ॥१०४॥

**आदिशब्दात्सखीस्नेह आत्मन्युद्दीपनो वरः।**

यथा—

हरिमवेक्ष्य पुरो गुरुतो भिया मुहुरभून्मुकुलन्नवविभ्रमा।
ललितया विवृते निजसौहृदे चलदृगञ्चलमाधित राधिका॥ १०५॥

इत्युद्दीपनविभावाः।

---

यथा मामादिशति तथैव कर्तुं शक्नोमि न तु तदन्यथा इति चेत्तत्राह—**रे** इत्याक्रोशामन्त्रणे। यदि त्वं मां जिघांसस्येव तदा संप्रति त्वयि को वा विनयः। उचित इति भावः। रे इति दक्षिणदेशोद्भवत्वात् श्लेषेण हे सरल, क्षणं क्षणमात्रं मयि वामतामदक्षिणतां मुञ्च यदि कन्दर्पसेवायां प्रवृत्तस्तदपि स्वधर्ममाभिजात्यं च मा त्याक्षीरेव। क्षणमपि तं कुर्विति भावः। ननु कं स्वधर्ममाचरामीति ब्रूहीति आह—हे जगत्प्राण। 'समीरमारुतमरुज्जगत्प्राणसमीरणाः।' इत्यभिधानात् तव जगत्प्राणरूपत्वे मम च जगन्मध्यवर्तित्वेऽपि यदि मम प्राणहरो भविष्यति तदा मम पुरः क्षणं माधवं विधायैव तव माधवसखत्वात् तदानयने सामर्थ्यम्। माधवो वसन्तः श्रीकृष्णश्च न त्वविधायैव यथाहमेकवारमप्यन्तकाले तं पश्येयमिति भावः॥ १०३॥ श्रीकृष्णे राधामाह—**मानेनेति**॥ १०४॥ रूपमञ्जरी स्वसखीमाह—**हरिमवेक्ष्येति। गुरुशङ्कयेति।** श्वश्रुपतिर्वा कदाचिदागच्छेदिति भावनया। गुरोर्या शङ्का तयेति वा। मुकुलन् मुकुलमिवाचरन्। अस्पष्टविभ्रमेत्यर्थः। **ललितयेति**। तदीयास्पष्टविभ्रमस्य श्रीकृष्णदिदृक्षितत्वं ज्ञात्वेत्यर्थः। हे प्रियसखि, पित्रादिस्नेहं तथा प्राप्तामपि चन्द्रावलीं परित्यज्य तदेकतानमानसोऽयं त्वत्सौहार्दस्थानमहमिति मामेवाश्रितवान्, अहं चाश्वास्य त्वदन्तिकमिममलम्भयम्। अतोऽद्य मामवेक्ष्य गुरुभयमप्यनवेक्ष्य कृपापाङ्गेनैनमङ्गीकुर्विति सौहार्दे विवृते आधित अर्पितवती॥ १०५॥

इत्युद्दीपनविभावविवृतिः।

---

॥ १०४॥ **हरिमवेक्ष्येति। ललितयेति**। अनयोर्भिन्नसमयत्वं ज्ञेयम्। आधित हरावर्पितवती॥ १०५॥ इत्युद्दीपनविभावविवृतिः॥

अथानुभावाः ।

अनुभावास्त्वलंकारास्तथैवोद्भास्वराभिधाः ।
वाचिकाश्चेति विद्वद्भिस्त्रिधामी परिकीर्तिताः ॥ १ ॥

तत्रालंकाराः—

यौवने सत्त्वजास्तासामलंकारास्तु विंशतिः ।
उदयन्त्यद्भुताः कान्ते सर्वथाभिनिवेशतः ॥ २ ॥
भावो हावश्च हेला च प्रोक्तास्तत्र त्रयोऽङ्गजाः ।
शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ॥ ३ ॥
औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः ।
लीला विलासो विच्छित्तिर्विभ्रमः किलकिंचितम् ॥ ४ ॥
मोट्टायितं कुट्टमितं विब्वोको ललितं तथा ।
विकृतं चेति विज्ञेया दश तासां स्वभावजाः ॥ ५ ॥

तत्र भावः—

प्रादुर्भावं व्रजत्येव रत्याख्ये भाव उज्ज्वले ।
निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ॥ ६ ॥

---

अलंकारा भावादिचकितान्ता द्वाविंशतिः । उद्भास्वरा नीव्युत्तरीयसंभावनादयः सप्त । वाचिका आलापादयो द्वादश ॥ १ ॥ कृष्णसंबन्धिचेष्टोत्थभावैराक्रान्तं चित्तं सत्त्वं तस्माज्जाताः सत्त्वजाः ॥ २ ॥ **अङ्गजा इति** । नेत्रान्तभ्रूग्रीवाभङ्ग्यादीनां तत्सूचकत्वात्तेभ्य एवाङ्गेभ्यो जाताः । प्रतीता इत्यर्थः । न तु वस्तुतोऽङ्गजाः सत्त्वजा इत्युक्तत्वात् ॥ ३ ॥ **अयत्नजा इति** । शोभाद्यर्थं वेशादिप्रयत्नाभावेऽपि शोभादयः स्युरित्यर्थः ॥ ४ ॥ **स्वभावजा इति** । लीलाद्यर्थप्रयत्नवत्त्वेऽपि युवतीनां लीलादयः—स्वाभाविकप्रयत्नादेवोत्पद्यन्त इति ॥ ५ ॥ **तत्र भाव इति** । उज्ज्वले शृङ्गारसे रत्याख्यो रतिनामा यो भावः स्थायी तस्मिन् प्रादुर्भावं व्रजति प्राप्नुवति सति चित्ते या प्रथमविक्रिया वयःसंधौ अभूत-

---

अलंकारादिसंज्ञा रूढ्या प्रयुक्ता यथाकथंचिदेव यौगिकार्थं भजन्ते ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ **उज्ज्वल इति** । निमित्तसप्तमी 'चर्मणि द्वीपिनं

तथा ह्युक्तम्—

चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति।
तत्राद्या विक्रिया भावो बीजस्यादिविकारवत्॥ ७॥

---

पूर्वः प्रथमो यः कन्दर्पक्षोभानुभवः स भावः। चित्ते कीदृशे। निर्विकारात्मके पौगण्डवयस्त्वेन कन्दर्पप्रवेशाभावात् तद्विकारहीन इत्यर्थः। ननु तर्हि कथमस्यानुभावत्वं बहिर्विकारस्यैव भावबोधकत्वे संभवात्। यदुक्तम्—'अनुभावास्तु चित्तस्थभावानामवबोधकाः' इति। सत्यम्। सात्त्विकानां स्तम्भस्वेदादीनामनुभावत्वमिवैषां भावहावादीनामपि युगपदन्तर्बहिर्विकाररूपत्वमनुभावत्वं च। वयःसंध्यारम्भे यदैव श्रीकृष्णदर्शनश्रवणादिभिरभूतचरः कन्दर्पक्षोभानुभवो भवेत्तदैवान्तश्चित्तं विकृतं स्यात् बहिरपि तद्व्यञ्जिका नेत्रादिभङ्गी स्यादिति। अत एवैतल्लक्षणमेवं व्याख्येयम्। चित्ते निर्विकारात्मके सति रत्याख्यभावोदयाद्या प्रथमविक्रिया अर्थाच्चित्तस्य यथासम्भवं तनोश्च स्वभाव इति। सर्वथा चित्तविकारस्यैव विवक्षितत्वे चित्तस्य निर्विकारस्येति षष्ठ्यन्तरेव प्रयुज्यते। अलंकारकौस्तुभकृद्भिस्त्वनुभावादिदमेव पृथगिति लक्षितम्। नन्वेवंलिखितलक्षणोऽयं भावस्तथास्यैव परिणामविशेषो हावो हेला चेत्येतत्त्रितयं वयःसंध्युत्तरकाले तरुणीनां न संभवेत्। सत्यं न संभवेदेव। यदुक्तं साहित्यदर्पणकृद्भिरपि। 'जन्मतः प्रभृति निर्विकारे मनस्युद्बुद्धमात्रो विकारो भावः।' इत्येके। अन्ये पुनरेवमाहुः—'आसां व्रजसुन्दरीणां सर्वासामेवावस्थानां नित्यत्वात् प्रकटतारुण्येऽपि गूढो वयःसंधिः सदास्त्येवेति। कश्चिदत्रैवं व्याचष्टे। प्रथमविक्रियेति न केवलमात्यन्तिकमेव प्रथमत्वं व्याख्येयम्। किंतु वार्तान्तरासक्तत्वेन कादाचित्केऽपि निर्विकारत्वे श्रीकृष्णदर्शनादिभिः स्थायिनि रत्याख्ये भावे प्राकट्यं प्राप्ते या प्रथमा ईषन्मात्रा विक्रिया स भाव इति। अपरे तु न ह्यभावाद्भावो जायत इत्यतो गाम्भीर्यलज्जादिना यन्नि-

---

ह्नन्ति' इतिवत्। ततश्चोज्ज्वलाख्यं [illegible]गीतुं रत्याख्ये रतितयान्यत्र प्रसिद्धे मधुरेतिनाम्ना त्वत्र परिभाषि[illegible] भावे [illegible] गाम्भीर्यलज्जादिना यन्निर्विकारं व्यञ्जनाशून्यं चित्तं तत्र या प्रथमा विक्रि[illegible] संवरीतुमशक्यतया नेत्रादिभङ्ग्या तस्य भावस्य किंचिद्व्यञ्जना प्रादुर्भावं [illegible]ति। सा व्यञ्जना भावाख्योऽनुभाव इत्यर्थः। न त्वयं स्थायी भावो व्यभिचारी भावो वा। 'विकारो मानसो भावोऽ-

यथा—

पितुर्गोष्ठे स्फीते कुसुमिनि पुरा खाण्डववने
न ते दृष्ट्वा संक्रन्दनमपि मनः स्पन्दनमगात् ।

---

विकारं तद्व्यञ्जनाशून्यं चित्तं तत्र या प्रथमा विक्रिया संवरीतुं दुःशकतया बहिर्नेत्रादिभङ्गीभावव्यञ्जिका स्यात् स भाव इत्याहुः । वस्तुतस्तु श्रीमद्ग्रन्थकृच्चरणानामन्य एवाशयस्तं च पितुर्गोष्ठे स्फीत इत्याद्युदाहरणादवगम्यैवं व्याख्येयम् । प्राकृतगुणरहितत्वेन निर्गुणस्य भगवतो गुणा एव श्रीकृष्णव्यतिरिक्तपुरुषान्तरादविक्रियमाणत्वेन निर्विकारात्मके चित्ते सति या प्रथमा विक्रिया श्रीकृष्णस्य दर्शनाद् य ईषन्मनसस्तनोश्च विकारः स एव भाव इत्यर्थः ॥ ६ ॥ न चालंकारिकैरेवं न व्याख्यातमिति वाच्यं प्राचीनैरुक्तत्वादित्याह—**तथा हीति** । विकृतेः कारणे सुन्दरपुरुषदर्शने सत्यपि चित्तस्याविकृतिश्चेत् सत्त्वं रजस्तमःस्पर्शशून्यं शुद्धं सत्त्वं तस्यैवाविक्रियमाणस्वभावत्वात् । तत्र सति या आद्या विक्रिया श्रीकृष्णदर्शनोत्था अप्राकृता । चिदानन्दमयीत्यर्थः । स भावः बीजस्य बीजविशेषस्य वास्तूकादेर्विकारकारणे वर्षावृष्ट्यादावप्यविक्रियमाणस्य हेम्नः हिमस्पर्शे यथा आदिविकार इति । प्राकृतवस्तुनाप्यप्राकृतपदार्थस्योपमा नासमञ्जसा । मेघादिनेव श्रीकृष्णस्य अप्राकृतवस्तूनां लोके साक्षादनुपलब्धेरिति । ननु तर्ह्येतल्लक्षणं प्राकृतनायिकासु दमयन्तीमालत्यादिष्वव्याप्तमिति चेदिष्टापत्तिरेव । 'रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति ।' इति श्रुतिप्रतिपादितस्य साक्षाच्चिदानन्दघनस्य रसस्य विकृतिर्भवदादिभिरप्राकृतीर्भगवत्प्रेयसीरालक्ष्यैव कृता । तत्र मुह्यद्भिः कविभिर्यदि प्राकृतादिषु पिशितासृग्विण्मूत्रजरामरणादिमतीषु स्त्रीषु स रसः पर्यापयिष्यते तर्हि वयं किं कुर्मः । तथा ह्युक्तं रसपक्षव्याख्यायाम्—'तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः । तेजोवारिमृदां यथा विनिमयः ।' इति । य आद्यस्य रसस्य ब्रह्म तत्त्वमादिकवये भरताय तेने । 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः । यत्र रसतत्त्वे कवयः काव्यकृतो मुह्यन्ति । भ्रमेणालक्ष्येऽपि प्राकृतरसलक्षणस्य संगमनात् । तत्र दृष्टान्तस्तेजोवारीति ॥ ७ ॥ काचित्सखी ज्ञाततत्त्वापि हृदयोद्घाटनपाटववती स्वयूथेश्वरीमजानतीव पृच्छति—**पितुर्गोष्ठ इति ।**

---

नुभावो भावबोधकः ।' इति विभागलब्धेः । किंत्वत्र भाव्यते व्यज्यतेऽनेनेति करणे घञ् ॥ ६ ॥ विकृतेर्भावव्यञ्जनायाः कारणे भावोत्पत्तिलक्षणे सत्यपि चित्तस्याविकृतिर्बहिर्व्यक्तिशून्यत्वं सत्त्वमुच्यते तत्र सत्त्वे सति आद्या विक्रिया प्रथमा किंचिद्व्यञ्जनादिभावतया संज्ञाप्यते स च रतिस्थानीयस्य बीजस्यादिविकारत्वदित्यर्थः ॥ ७ ॥ **पितुर्गोष्ठे स्फीत** इत्यादिकं परिहासाय संभावितमिति कृत्वा

पुरो वृन्दारण्ये विहरति मुकुन्दे सखि मुदा
किमान्दोलादक्ष्णः श्रुतिकुमुदमिन्दीवरमभूत् ॥ ८ ॥

अथ हावः—

**ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविकासकृत् ।**
**भावादीषत्प्रकाशो यः स हाव इति कथ्यते ॥ ९ ॥**

यथा—

साचिस्तम्भितकण्ठि कुड्मलवतीं नेत्रालिरभ्येति ते
घूर्णन्कर्णलतां मनाग्विकसिता भ्रूवल्लरी नृत्यति ।
अत्र प्रादुरभूत्तटे सुमनसामुल्लासकस्त्वत्पुरो
गौराङ्गि प्रथमं वनप्रियवधूबन्धुः स्फुटं माधवः ॥ १० ॥

---

संप्रति त्वं द्वित्रदिनानि खाण्डवप्रस्थनिवासिनः पितुर्गृहात् श्वशुरगृहम् । नन्दगोष्ठमागतासीत्यर्थः । अत्र पुरा कुसुमिनीत्युद्दीपनविभावो दर्शितः । संक्रन्दनमिन्द्रमतिसुन्दरमपि दृष्ट्वा मनो न स्पन्दनमगात् ईषदपि नाचलदिति तत्र सङ्गिन्या मया तथा लक्षितैवासीरिति विकृतेः कारणेऽपि विकाराभाव उक्तः । पुरोऽग्रे मुकुन्दे विहरतीति तमपाङ्गेन दृष्टवत्यास्तवाक्ष्णस्तथा आन्दोलो जातो यथा श्रुतावतंसितं श्वेतोत्पलमभूदिति प्रथमविकारो नयनचाञ्चल्यं भावलक्षणम् ॥ ८ ॥ भावात् नयनचाञ्चल्यमात्रसूच्याद्भावात् सकाशादीषदधिकः प्रकाशो यस्य सः । ततोऽपि विकाराधिक्यादित्यर्थः । ग्रीवाया रेचकस्तिर्यक्करणम् ॥ ९ ॥ श्यामा श्रीराधामाह—साचि वक्रीकृतः स्तम्भितः स्तम्भतां नीतः कण्ठो ययेत्यौत्सुक्याधिक्यादपाङ्गदर्शनेनातृप्यन्त्या त्वया ग्रीवा तिरश्चीनीकृता । सा चानन्द-

---

पुरो वृन्दारण्ये इत्यादिकं साश्चर्यमिवोक्तम् । अपीति संभावनायाम् । वस्तुतस्तु संक्रन्दनं दृष्ट्वा मनः कर्तृ स्पन्दनं मागात् । मुकुन्दे तु विहरति किमित्यादिवाग्भङ्ग्या मुकुन्दस्यैव माधुर्यमाधिक्येन स्थापितम् ॥ ८ ॥ ग्रीवाया रेचको ग्रीवायास्तिर्यक्करणविशेषः ॥ ९ ॥ सुमनसां सुचित्तानाम् पक्षे पुष्पाणाम् । वनप्रिया या वध्वः श्रीवृन्दावनविहारिण्यस्तासां बन्धुः, पक्षे कोकिलवधूनां

अथ हेला—

**हाव एव भवेद्धेला व्यक्तः शृङ्गारसूचकः।**

यथा—

श्रुते वेणौ वक्षः स्फुरितकुचमाध्मातमपि ते
तिरोविक्षिप्ताक्षं पुलकितकपोलं च वदनम्।
स्खलत्काञ्चि स्वेदार्गलितसिचयं चापि जघनं
प्रमादं मा कार्षीः सखि चरति सव्ये गुरुजनः॥ ११॥

अथायत्नजाः—

तत्र शोभा—

**सा शोभा रूपभोगाद्यैर्यत्स्यादङ्गविभूषणम्॥ १२॥**

---

जाड्यभ्यां स्तब्धीभूता तथैव स्थितेत्युपहासः। कर्ण एव लता तां नेत्रालिरभिमुखमेति यतः। कुड्मलवतीं मुकुलान्वितां पक्षे सावतंसाम्। तत्र कारणमाह—**अत्रेत्यादि।** सुमनसां मालतीनाम्, अतिशयोक्त्या सुन्दरीणाम्। 'सुमना मालती जातिः।' इत्यमरः। श्लेषेण सुचित्तानां पुष्पाणां च। वनप्रियः कोकिलः, पक्षे वनमेव प्रियं यासां तासां वधूनां बन्धुः। माधवो वसन्तः श्रीकृष्णश्च। स्फुटं तस्मादेवं संभावयामीति भावः॥ १०॥ विशाखा श्रीराधामाह—**श्रुत इति।** आध्मातं भस्त्रावत् श्वासगत्या गतिप्रकारेण नतोन्नतं जघनमपीत्यन्वयः। प्रमादमनवधानम्। **सव्ये गुरुजनश्चरतीति।** तेन त्वं दक्षिणे प्रदेशे पक्षद्वारान्निःसृत्य शीघ्रमेवाभिसर। अहं तु गुरुजनं समाधाय पश्चादायास्य इति ध्वनितम्

---

बन्धुः। माधवः श्रीकृष्णः, पक्षे वसन्तः। स्फुटमित्युत्प्रेक्षायाम्। तस्मादत्रेत्यादिकं संभावयामीत्यर्थः॥ १०॥ आध्मातं भस्त्रावत् श्वासं वायुगत्या गतिप्रकारेणैव नतोन्नतं जघनमपीत्यन्वयः। प्रमादमनवधानम्॥ ११॥ भोगः संभोगः

यथा—

धृत्वा रक्ताङ्गुलिकिसलयैर्नीपशाखां विशाखा
निष्क्रामन्ती व्रततिभवनात्प्रातरुद्घूर्णिताक्षी।
वेणीमंसोपरि विलुठतीमर्धमुक्तां वहन्ती
लग्ना स्वान्ते मम नहि बहिः सेयमद्याप्ययासीत् ॥ १३ ॥

अथ **कान्तिः**—

**शोभैव कान्तिराख्याता मन्मथाप्यायनोज्ज्वला।**

यथा—

प्रकृतिमधुरमूर्तिर्बाढमत्राप्युदञ्च-
त्तरुणिमनवलक्ष्मीलेखयालिङ्गिताङ्गी।
वरमदनविहारैरद्य तत्राप्युदारा
मदयति हृदयं मे रुन्धती राधिकेयम् ॥ १४ ॥

अथ **दीप्तिः**—

**कान्तिरेव वयोभोगदेशकालगुणादिभिः ॥ १५ ॥**
**उद्दीपितातिविस्तारं प्राप्ता चेद्दीप्तिरुच्यते।**

यथा—

निमीलन्नेत्रश्रीरचटुलपटीराचलमरु-
न्निपीतस्वेदाम्बुस्त्रुटदमलहारोज्ज्वलकुचा।

॥ ११ ॥ १२ ॥ श्रीकृष्णो विशाखासखीमाह—**धृत्वेति**। तेन दिनेऽप्यत्र पुनस्तामभिसारयेति ध्वनिः ॥ १३ ॥ श्रीकृष्णः सुबलमाह—**प्रकृतीति**। मम हृदयं रुन्धतीति संप्रति नाहमन्यस्यै कस्यै अपि स्पृहयामीति भावः। ननु काममहोदधेस्तव कथमेकयानयैव निर्वाहस्तत्राह—**उदारेति**। इयमेकैव मम मनोरथं सर्वमेव पूरयतीति भावः ॥ १४ ॥ १५ ॥ रूपमञ्जरी स्वसखीं प्रत्याह—**निमीलदिति**। निद्राणेत्यर्थः। पटीराचलो मलयपर्वतः। त्रुटदिति।

॥ १२ ॥ १३ ॥ प्रकृत्या गाढानुरागस्वाभाव्येन मधुरा मूर्तिर्यस्याः सा ॥ १४ ॥

निकुञ्जे क्षिप्ताङ्गी शशिकिरणकिर्मीरिततटे
किशोरी सा तेने हरिमनसि राधा मनसिजम् ॥ १६ ॥

अथ **माधुर्यम्**—

**माधुर्यं नाम चेष्टानां सर्वावस्थासु चारुता ॥ १७ ॥**

यथा—

असव्यं कंसारेर्भुजशिरसि धृत्वा पुलकिनं
निजश्रोण्यां सव्यं करमनृजुविष्कम्भितपदा ।
दधाना मूर्धानं लघुतरतिरःस्रंसिनमियं
बभौ रासोत्तीर्णा मुहुरलसमूर्तिः शशिमुखी ॥ १८ ॥

अथ **प्रगल्भता**—

**निःशङ्कत्वं प्रयोगेषु बुधैरुक्ता प्रगल्भता ।**

यथा विदग्धमाधवे—

प्रातिकूल्यमिव यद्विवृण्वती राधिकारदनखार्पणोद्धुरा ।
केलिकर्मणि गता प्रवीणतां तेन तुष्टिमतुलां हरिर्ययौ ॥ १९ ॥

---

क्षिप्ताङ्गीत्याभ्यां संप्रयोगाधिक्यजनितः श्रमो व्यञ्जितः । लताजालरन्ध्रात् पतितेन शशिकिरणेन किर्मीरितं चित्रितं तटं यस्य तस्मिन्नित्यनेन तदङ्गदर्शनशोभाधिक्यं मनसिजं तेने इति; पुनरपि संप्रयोगार्थं श्रीहरिस्तां जागरांबभूवेति; रात्रावद्य सा निद्रां न लेभे इति; संप्रति तां क्षणं शाययितुं शीघ्रं याम इति ध्वनिः ॥ १६ ॥ १७ ॥ रतिमञ्जरी दूरात्स्वसखीं दर्शयति । असव्यं दक्षिणकरम् । भुजशिरसि स्कन्धे । शशिमुखी श्रीराधा तस्याः सखी वा ॥ १८ ॥ प्रयोगेषु संप्रयोगेषु प्रगल्भता शौर्यम् ॥ वृन्दाह—**प्रातीति** । तेन तच्छोभादर्शनेनेत्यर्थः । अप्रागल्भ्यस्वभावाया अपि श्रीराधायाः प्रागल्भ्यं कामोन्मादाद-

अथौदार्यम्—

**औदार्यं विनयं प्राहुः सर्वावस्थागतं बुधाः ॥ २० ॥**

यथा विदग्धमाधवे—

न्यविशत नयनान्ते कापि सारल्यनिष्ठा
वचसि च विनयेन स्तोत्रभङ्गी न्यवात्सीत्।
अजनि च मयि भूयान् संभ्रमस्तेन तस्या
व्यवृणुत हृदि मन्युं सुष्ठु दाक्षिण्यमेव ॥ २१ ॥

यथा वा—

कृतज्ञोऽपि प्रेमोज्ज्वलमतिरपि स्फारविनयो-
ऽप्यभिज्ञानां चूडामणिरपि कृपानीरधिरपि।
यदन्तःस्वच्छोऽपि स्मरति न हरिर्गोकुलभुवं
ममैवेदं जन्मान्तरदुरितदुष्टद्रुमफलम् ॥ २२ ॥

अथ **धैर्यम्**—

**स्थिरा चित्तोन्नतिर्या तु तद्धैर्यमिति कीर्त्यते।**

---

यत्नजमिदमिति ज्ञेयम् ॥ १९ ॥ २० ॥ श्रीकृष्णो मधुमङ्गलमाह—**न्यविशतेति**। तस्याश्चन्द्रावल्याः ॥ चन्द्रावल्या दक्षिणायाः प्रायः स्वभाव एवायम् ॥ २१ ॥ किं च तदानीं स्वविनयसिद्ध्यर्थं नेत्रान्तसारल्यादीनां किंचिद्यत्नकृतत्वेन कृत्रिमत्वादयत्नजश्च विनयोऽयं सम्यङ् संभवेदित्यपरितुष्यन्नाह—**यथा वेति**। प्रोषितभर्तृका श्रीराधां प्राह—**कृतेति**। स्वभावतो वामाया अपि श्रीराधायाः प्रेयसि विनयोऽयं तदानीं दैन्यनिर्वेदादिभिरयत्नज एवाभूत्। पूर्वत्र यत्नेनैवावहित्था सिध्यति न त्ववहित्थयैव यत्न इति विनयस्य यत्नजत्वमेव ॥ २२ ॥

---

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ **सुष्ठ्विति**। स्वाभाविकं दाक्षिण्यमतिक्रम्यारोपितमित्यर्थः। तज्जातं मन्युमेव व्यावृणुतेत्यर्थः। सुष्ठुतामेव दर्श-

यथा ललितमाधवे—

औदासीन्यधुरापरीतहृदयः काठिन्यमालम्बतां
कामं श्यामलसुन्दरो मयि सखि स्वैरी सहस्रं समाः ।
किंतु भ्रान्तिभरादपि क्षणमिदं तत्र प्रियेभ्यः प्रिये
चेतो जन्मनि जन्मनि प्रणयितादास्यं न मे हास्यति ॥२३॥

अथ **स्वभावजाः**—

तत्र **लीला**—

**प्रियानुकरणं लीला रम्यैर्वेशक्रियादिभिः ॥ २४ ॥**

यथा विष्णुपुराणे—

दुष्टकालिय तिष्ठाद्य कृष्णोऽहमिति चापरा ।
बाहुमास्फोट्य कृष्णस्य लीलासर्वस्वमाददे ॥ २५ ॥

---

श्रीराधा नववृन्दामाह—**औदासीन्येति** । प्रणयितया प्रेम्णा दास्यं कैंकर्यं न हास्यति न त्यक्ष्यति । अत्र विरहवैवश्येनाधीरस्वभावाया अपि श्रीराधायास्तदानीं रत्याख्यसंचारिप्राबल्योदयात् धैर्यमिदमयत्नजम् । एवं शोभादयो माधुर्यान्तास्तत्तद्देहस्वभावजा अपि शोभाद्यर्थप्रयत्नाभावादयत्नजशब्देनैवोच्यन्ते । प्रगल्भतादयस्त्रयोऽलंकारास्तु न स्वभावजाः तत्र तत्रोक्तयुक्त्या नापि प्रयत्नजा इत्ययत्नजा एव ॥ २३ ॥ स्वभावजा इत्येषु क्वापि यत्नस्य बुद्धिपूर्वकत्वम्, क्वापि संचारिभावोत्थत्वेनाबुद्धिपूर्वकत्वम् । किंतु सर्वत्र स्वभावो जागरूक इति स्वभावजशब्देनैवोच्यन्त इति प्रियस्यानुकरणं बुद्धिपूर्वकमबुद्धिपूर्वकं वा प्रेमवतीनां स्वाभाविकमेव ॥ २४ ॥ पराशरो मैत्रेयं प्रत्याह—**दुष्टेति** । आस्फोट्य शौर्यद्योतनार्थं वामबाहुप्रगण्डे करतलप्रहारेण शब्दमुत्थाप्य । लीलेयं विप्रलम्भभरे-

---

यति—कापीत्यादिभिः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ लीलासर्वस्वं तस्या लीलाया यावान् परिकरस्तावन्तमाददे गृहीतवती । अनुकृतवतीत्यर्थः ॥ २५ ॥

यथा वा छन्दोमञ्जर्याम्—

मृगमदकृतचर्चा पीतकौशेयवासा
रुचिरशिखिशिखण्डा बद्धधम्मिल्लपाशा।
अनृजुनिहितमंसे वंशमुत्क्वाणयन्ती
कृतमधुरिपुवेशा मालिनी पातु राधा॥ २६॥

अथ **विलासः**—

**गतिस्थानासनादीनां मुखनेत्रादिकर्मणाम्।**
**तात्कालिकं तु वैशिष्ट्यं विलासः प्रियसंगजम्॥ २७॥**

यथा—

रुणत्सि पुरतः स्फुरत्यधरे कथं नासिका-
शिखाग्रथितमौक्तिकोन्नमनकैतवेन स्मितम्।
निरास्थदचिरं सुधाकिरणकौमुदीमाधुरीं
मनागपि तवोद्गता मधुरदन्ति दन्तद्युतिः॥ २८॥

यथा वा—

अध्यासीनममुं कदम्बनिकटे क्रीडाकुटीरस्थली-
माभीरेन्द्रकुमारमत्र रभसादालोकयन्त्याः पुरः।

---

णोन्मादोत्थत्वादबुद्धिपूर्वकयत्नवती॥ २५॥ बुद्धिपूर्वकयत्नवतीमपि तामुदाहर्तुमाह—**यथा वेति**। रतिमञ्जरी स्वसखीमाह—**मृगेति**। मालिनी मालावती तन्नामछन्दश्च॥ २६॥ **तात्कालिकमिति**। अनेन प्रियसङ्गारम्भकाल एव लक्ष्यते॥ २७॥ अभिसार्यानीतां श्रीराधां श्रीकृष्णाग्रे वाम्यं कुर्वाणां वीरा प्राह—**स्मितं रुणत्सीति**। स्मितेन मुखचन्द्रव्यापारवैशिष्ट्यं निरास्थत्तिरस्कृतवती॥ २८॥ नेत्रव्यापारवैशिष्ट्यं दर्शयितुमाह—**यथा वेति**। अभिसार्यानीतां श्रीराधां वृन्दा प्राह—**अध्यासीनमिति**। दुग्धसमुद्रस्य सुन्दरलहरीणामिव

---

॥ २६॥ २७॥ निरास्थत् निरस्तवती॥ २८॥ दुग्धेत्यादिना स्मितमेव

दिग्धा दुग्धसमुद्रमुग्धलहरी लावण्यनिस्यन्दिभिः
कालिन्दी तव दृक्तरङ्गितभरैस्तन्वङ्गि गङ्गायते ॥ २९ ॥

अथ **विच्छित्तिः**—

**आकल्पकल्पनाल्पापि विच्छित्तिः कान्तिपोषकृत् ।**

यथा—

माकन्दपत्रेण मुकुन्दचेतःप्रमोदिना मारुतकम्पितेन ।
रक्तेन कर्णाभरणीकृतेन राधामुखाम्भोरुहमुल्ललास ॥ ३० ॥

यथा वा हरिवंशे—

एकेनामलपत्रेण कण्ठसूत्रावलम्बिना ।
रराज बर्हिपत्रेण मन्दमारुतकम्पिना ॥ ३१ ॥

**सखीयत्नादिव धृतिर्मण्डनानां प्रियागसि ॥ ३२ ॥**
**सेर्ष्यावज्ञा वरस्त्रीभिर्विच्छित्तिरिति केचन ।**

यथा—

मुद्रां गाढतरां विधाय निहिते दूरीकुरुष्वाङ्गदे
ग्रन्थिं न्यस्य कठोरमर्पितमितः कण्ठान्मणिं भ्रंशय ।

---

लावण्यं निस्यन्दयितुं शीलं येषां तैर्दिग्धा निचितेति स्मितं व्यञ्जितम् ॥ २९ ॥ वृन्दा नान्दीमुखीमाह—**माकन्देति** ॥ ३० ॥ श्रीकृष्णेऽप्युदाहर्तुमाह—**यथा वेति**। वैशम्पायनो व्रजविहारिणं श्रीकृष्णं वर्णयति—बर्हिपत्रेण मयूरपक्षेण । कीदृशेन । अमलानि पत्राणि धात्र्यादिदलानि । यद्वा आमलानि आमलक्या एव दलानि । तच्चतुर्दिक्शोभार्थं वल्लीसूत्रेण प्रोतानि यत्र तेन। 'आमलं कमलं कुष्ठम्' इति वैद्यकदृष्टेः ॥ ३१ ॥ प्रियागसि प्रियकर्तृकेऽपराधे सतीर्ष्यावज्ञाभ्यां सह वर्तमाना ॥ ३२ ॥ मानिनी श्रीराधा विशाखामाह—**गाढतरामिति । कठोरमिति** । आभ्यां स्वयं दूरीकरणसामर्थ्यं द्योतितम् । । तेन च त्वमेव मल्लाधवं

---

व्यञ्जितम् । ततश्च कालिन्द्यां गङ्गायमानत्वं व्यक्तम् ॥ २९ ॥ ३० ॥ प्रियागसि

मुग्धे कृष्णभुजङ्गदृष्टिकलया दुर्वारया दूषिते
रत्नालंकरणे मनागपि मनस्तृष्णां न पुष्णाति मे ॥ ३३ ॥

अथ **विभ्रमः**—

**वल्लभप्राप्तिवेलायां मदनावेशसंभ्रमात् ॥ ३४ ॥**
**विभ्रमो हारमाल्यादिभूषास्थानविपर्ययः ।**

यथा विदग्धमाधवे—

धम्मिल्लोपरि नीलरत्नरचितो हारस्त्वयारोपितो
विन्यस्तः कुचकुम्भयोः कुवलयश्रेणीकृतो गर्भकः ।
अङ्गे चर्चितमञ्जनं विनिहिता कस्तूरिका नेत्रयोः
कंसारेरभिसारसंभ्रमभरान्मन्ये जगद्विस्मृतम् ॥ ३५ ॥

यथा वा श्रीदशमे—

लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने ।
व्यत्यस्तवस्त्राभरणाः काश्चित्कृष्णान्तिकं ययुः ॥ ३६ ॥

**अधीनस्यापि सेवायां कान्तस्यानभिनन्दनम् ॥ ३७ ॥**

---

कुर्वती विपक्षायसे इति ध्वनिः ॥ नन्वलंकारेण किमपराद्धं, तत्राह—**मुग्धे इति ।** तव ज्ञानं नास्तीति भावः । कृष्णभुजङ्गेति । दृष्ट्वैव विषवर्षणादेषु विषं लग्नमिति भावः । तद्दृष्टिविषदिग्धेषु मदङ्गेषु पुनर्विषदाहार्पणमयुक्तमिति भावः ॥ ३३ ॥ वल्लभप्राप्त्यर्थं वल्लभनिकटस्थानगमनार्थं या वेला अभिसारसमयस्तस्यां हारादीनां स्थानविपर्ययः । अयथास्थानधृतिरित्यर्थः ॥ ३४ ॥ ललिता श्रीराधामाह—**धम्मिल्लेति ।** गर्भकः केशोचितमाल्यम् ॥ ३५ ॥ आर्षमुदाहर्तुमाह—**यथा वेति** ॥ ३६ ॥ वामतोद्रेकादनभिनन्दनं वस्तुतस्तु मनसा त्वभिनन्दनम्-

---

प्रियकर्तृकेऽपराधे सति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ **कान्तस्येति ।** मनसाभिनन्दनं तु वर्तत एवेति भावः । तर्हि कथं तत्राह—वामतोद्रेकात् वाङ्मात्रेण कौटिल्यातिशयात् । प्रणयविशेषस्य तथैव स्वभाव इति भावः ।

**विभ्रमो वामतोद्रेकात्स्यादित्याख्याति कश्चन ।**

यथा—

त्वं गोविन्द मयासि किं नु कबरीबन्धार्थमभ्यर्थितः
क्लेशेनालमबद्ध एव चिकुरस्तोमो मुदं दोग्धि मे ।
वक्रस्यापि न मार्जनं कुरु घनं घर्माम्बु मे रोचते
नैवोत्तंसय मालतीर्मम शिरः खेदं भरेणाप्स्यति ॥ ३८ ॥

अथ **किलकिञ्चितम्**—

**गर्वाभिलाषरुदितस्मितासूयाभयक्रुधाम् ॥ ३९ ॥**

---

स्त्येवेति भावः ॥ **कश्चनाख्यातीति** । अन्ये विब्वोकोऽयमित्याचक्षते इत्यर्थः ॥ ३७ ॥ **मया किमर्थमभ्यर्थित इति** । ममैवानभिज्ञत्वं त्वां प्रयुञ्जानाया दोष इति भावः । **क्लेशेनालमिति** । बहुतरप्रयत्नपौनःपुन्येनापि मद्दासीभिरिव त्वया कबरीनिर्माणमशक्यमिति भावः । अत्र हेतुर्गोविन्देति । त्वया गोचारणशास्त्रमेवाबाल्यमभ्यस्तं नत्वेतत्कलाशास्त्रमिति भावः । 'गोविन्दो गोविचारणादिति' क्रमदीपिकोक्तेः । ननु तर्हि दास्य एव करणीयस्तत्राह—**अबद्ध एवेति** । त्वत्प्रेयानिदमपि न जानातीति त्वां मां च हसिष्यन्तीति ता नाहूयन्त इति भावः । **मुदं दोग्धीति** । त्वत्कृतप्रसाधनादप्रसाधनमेव वरं शोभत इति भावः । मार्जनं न कुर्विति मुखमार्जनप्रकारस्तावदन्य एव स च त्वया दुर्ज्ञेय एवेति भावः। तत्रापि हेतुर्गोविन्देति त्वं गवां मुखपृष्ठपिच्छादिमार्जनकण्डूयनादिविद्यायां पारं गतोऽसि न वाङ्गनाङ्गमार्जनकलायामिति भावः । गां विन्दतीति तत्पदव्युत्पत्तेः । मालतीर्बह्वीर्नोत्तंसय शिरोभूषणं न कुरु । तत्र **हेतुर्ममेत्यादि** । **खेदं भरेणेति** । नहि गुरुत्ववानवतंसः प्रशस्यते मद्दासीभिर्हि कृतनृत्ताभिर्मालतीभिरवतंसविरचनान्न तेन मम भाव इति भाव इति । अत्रापि हेतुर्गोविन्देति । गोवर्धनधारणात् प्राप्तगोविन्दाभिधानात् त्वमपि महाँल्लोको गोवर्धनपर्वतमपि स्वशिरसि भारं न मन्यसे मम तु निकृष्टायाः शिरो मालतीकुसुमस्तोमभरेणापि व्यथत इति भावः ॥ 'गोविन्देति चाभ्यधा'दिति स्मृतेः ॥ ३८ ॥ गर्वादीनां

---

तदुक्तम्—अहेरिव गतिः प्रेम्ण इति ॥ ३७ ॥ ३८ ॥ ३९ ॥ तथैवोदाहर-

संकरीकरणं हर्षादुच्यते किलकिञ्चितम्।

यथा—

मया जातोल्लासं[1] प्रियसहचरीलोचनपथे
बलान्न्यस्ते राधाकुचमुकुलयोः पाणिकमले।
उदञ्चद्भ्रूभेदं सपुलकमवष्टम्भि वलितं
स्मराम्यन्तस्तस्याः स्मितरुदितकान्तद्युति मुखम्॥ ४०॥

यथा वा दानकेलिकौमुद्याम्—

अन्तःस्मेरतयोज्ज्वला जलकणव्याकीर्णपक्ष्माङ्कुरा
किंचित्पाटलिताञ्चला रसिकतोत्सिक्ता पुरः कुञ्चती।

---

सप्तानां संकरीकरणं मिश्रणं युगपत् प्राकट्यमित्यर्थः। **हर्षादिति**। तत्र हर्ष एव हेतुरित्यर्थः॥ ३९॥ श्रीकृष्णः सुबलमाह—**मयेति**। उदञ्चद्भ्रूभेदमित्यसूयाक्रोधौ, सपुलकमित्यभिलाषः, अवष्टम्भि तिर्यक्तया स्तब्धमिति गर्वः, वलितं किंचित्परावृत्तमिति भयम्, स्मितरुदिताभ्यां कान्ता द्युतिर्यस्येति स्मितरुदिते शाब्दे एवेति सप्त॥ ४०॥ न केवलमङ्गस्पर्श एव किलकिञ्चितं स्यात् किंतु वर्त्मरोधनादावपि स्यादित्याख्यातुमाह—**यथा वेति**। कोऽपि नटेन्द्रो रसिकसभ्यान्नान्दीप्रयोगेणानन्दयति—**अन्तरिति**। पथि दानघट्टमार्गे श्रीमाधवेन शुल्कग्रहणमिषेण रुद्धायाः श्रीराधाया दृष्टिर्वो युष्माकं श्रियं प्रेमोत्थस्तम्भकम्पा-

---

न्नाह—**यथेति**। अवष्टम्भि तिर्यक्तया सखीमवलम्बमानमिति गर्वः। सपुलकमित्यभिलाषः। स्मितरुदिताभ्यां कान्तद्युतिकं मुखं यत्रेति। स्मितरुदिते शाब्दे एव। उदञ्चद्भ्रूभेदमित्यसूयाक्रोधौ। वलितं किंचित् परावृत्तमिति भयम्। **तस्या इति**। समासेनोपसर्जनीभूतामपि श्रीराधामेव गृह्णाति अन्यस्या अतिविप्रकृष्टत्वात्॥ ४०॥ रसिकोत्सिक्तेति गर्वः। उत्सेको ह्यत्र चित्तौन्नत्यम्। मधुरेत्यभिलाषः। व्याभुग्नेत्यसूया। स्मितरुदिते स्पष्टे। पुरो मीलितेति भयम्। किंचित्

---

१. 'जातौत्सुक्यम्' इति ख-पुस्तके पाठः.

रुद्धायाः पथि माधवेन मधुरव्याभुग्नतारोत्तरा
राधायाः किलकिंचितस्तबकिनी दृष्टिः श्रियं वः क्रियात् ॥ ४१ ॥

अथ **मोट्टायितम्**—

**कान्तस्मरणवार्तादौ हृदि तद्भावभावतः ॥ ४२ ॥**
**प्राकट्यमभिलाषस्य मोट्टायितमुदीर्यते ।**

यथा—

न ब्रूते क्रमबीजमालिभिरलं पृष्टापि पाली यदा
चातुर्येण तदग्रतस्तव कथा ताभिस्तदा प्रस्तुता ।
तां पीताम्बरजृम्भमाणवदनाम्भोजा क्षणं शृण्वती
बिम्बोष्ठी पुलकैर्विडम्बितवती फुल्लां कदम्बश्रियम् ॥ ४३ ॥

अथ **कुट्टमितम्**—

**स्तनाधरादिग्रहणे हृत्प्रीतावपि संभ्रमात् ॥ ४४ ॥**
**बहिः क्रोधो व्यथितवत्प्रोक्तं कुट्टमितं बुधैः ।**

---

द्दिशोभां क्रियात्। कीदृशी दृष्टिः । किलकिञ्चितमेव स्तबकनानाभावपुष्पगुच्छः तद्वतीति दृष्टेर्वल्लित्वमारोपितम्। तत्रापि श्रियं क्रियादिति कल्पवल्लीत्वम्, अन्तः स्मेरतयेति स्मितम्, जलकणेति रुदितम्, किंचित् पाटलितेति क्रोधः। 'श्वेतरक्तस्तु पाटलः' इत्यमरः। अत्र श्वेतिमा स्वाभाविक एव, रक्तिमा क्रोधात्, रसिकतयोत्कर्षेण सिक्तेत्यभिलाषः, पुरः कुञ्चतीति भयम्, मधुरं यथा स्यात्तथा व्याभुग्ना वक्रा या तारा कनीनिका तयोत्तरा श्रेष्ठा इति गर्वासूये। 'उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः' इति नानार्थः ॥ ४१ ॥ तद्भावः स्थायी रतिस्तस्य भावतो भावनातः ॥ ४२ ॥ वृन्दा श्रीकृष्णमाह—**न ब्रूत इति** ॥ ४३ ॥ स्तनाधरादीत्यत्र विविक्त इति शेषो देयः । सखीदृष्टिपथे तु किलकिञ्चितमेव स्यादिति ज्ञेयम्

---

पाटलिताञ्चलेति क्रुत् । किलकिञ्चितरूपो यः स्तबको गाम्भीर्यमयत्वादस्फुटो

यथा—

करौद्धत्यं हन्त स्थगय कबरी मे विघटते
दुकूलं च न्यञ्चत्यघहर तवास्तां विहसितम् ।
किमारब्धः कर्तुं त्वमनवसरे निर्दय मदात्
पताम्येषा पादे वितर शयितुं मे क्षणमपि ॥ ४५ ॥

यथा वा—

न भ्रूलतां कुटिलय क्षिप नैव हस्तं
वक्त्रं च कण्टकितगण्डमिदं न रुन्धि ।
प्रीणातु सुन्दरि तवाधरबन्धुजीवे
पीत्वा मधूनि मधुरे मधुसूदनोऽसौ ॥ ४६ ॥

अथ **विव्वोकः**—

**इष्टेऽपि गर्वमानाभ्यां विव्वोकः स्यादनादरः ॥ ४७ ॥**

अत्र **गर्वेण** यथा—

प्रियोक्तिलक्षेण विपक्षसंनिधौ
स्वीकारितां पश्य शिखण्डमौलिना ।

---

॥ ४४ ॥ संभुक्तप्रसाधिता श्रीराधा पुनरपि संभुक्तकामं श्रीकृष्णमाह—**करौद्धत्यमिति** ॥ ४५ ॥ अत्रोदाहरणे रतिश्रान्तायाः शिष(श)यिषोस्तस्या हृत्प्रीत्यभावः संभवेदित्यपरितुष्यन्नाह—**यथा वेति** । श्रीकृष्णः कदाचिद्रहःप्राप्तां श्रीराधां कण्ठे गृहीत्वाह—**न भ्रूलतामिति** । कण्टकितगण्डमिति हृत्प्रीतिचिह्नम् । असौ मधुसूदनो मल्लक्षणभ्रमरः ॥ ४६ ॥ इष्टेऽपि कान्तदत्तवस्तुनि कान्ते वा ॥ ४७ ॥ पुष्पमवचिन्वती रूपमञ्जरी कुवलयमालां दूराद्दर्शयन्त्याह—विपक्षसंनिधौ संध्यादेवीपूजापर्वणि श्रीराधायाश्चन्द्रावल्याश्च विनाभूते सर्वव्रजसुन्दरीणां संसदीत्यर्थः । प्रियोक्तिलक्षेणेति । प्रियतमे श्यामे, अद्भुत-

---

भावविशेषस्तद्वती ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ न **भ्रूलतामिति** । कृष्णस्यैव वचनम् ॥ ४६ ॥ इष्टेऽपि कान्तार्पितवस्तुन्यपि कान्ते वा । अधी-

श्यामातिवामा हृदयंगमामपि
स्रजं दराघ्राय निरास हेलया ॥ ४८ ॥

यथा वा—

स्फुरत्यग्रे तिष्ठन् सखि तव मुखक्षिप्तनयनः
प्रतीक्षां कृत्वायं भवदवसरस्याघदमनः ।
दृशोच्चैर्गाम्भीर्यग्रथितगुरुहेलागहनया
हसन्तीव क्षीबे त्वमिह वनमालां रचयसि ॥ ४९ ॥

**मानेन** यथा—

हरिणा सखि चाटुमण्डलीं क्रियमाणामवमन्य मन्युतः ।
न वृथाद्य सुशिक्षितामपि स्वयमध्यापय गौरि शारिकाम् ॥ ५० ॥

---

शिल्पमयीयं मत्पाणिनिर्मिता माला तवैव कण्ठदेशे स्थितिमवाप्य सफला भवत्वित्यादिना । **हृदयंगमामपीति** । एकान्ते चेत्प्राप्ताभविष्यत्तदेयं माला हृदय एव श्यामया अधारयिष्यत इति भावः । **दराघ्रायेति** । आघ्राणमपि त्वदनुरोधेनैव कृतं वस्तुतस्त्वीदृश्यो माला मत्किंकरीभिरपि न परिधीयन्त इति ज्ञापयामास । निरास चिक्षेप ॥ ४८ ॥ कान्ते चानादरं दर्शयितुमाह—**यथा वेति** । श्यामला श्रीराधामाह—**स्फुरतीति** । वनादपराह्ने आगत्य निःसङ्ग एव तमुद्यानं प्रविश्य कदा वा वनमाला पूर्णा भविष्यति, कदा वा क्षणमवसरं प्राप्स्यामि, प्राप्तेऽवसरे मम मनोरथं पूरयिष्यति नवेति ध्यायन्नित्यर्थः । त्वं तु दृशा हसन्तीव अहो कामिनः कस्य न कामातुरत्वमिति श्रीकृष्णमवजानतीवेत्यर्थः । दृशा कीदृश्या । गाम्भीर्यपुष्पैर्ग्रथिता गुरुहेलैव माला तया गहनया दुर्गमया किमियं मयि कृपावती कठोरा वेति तेन दुर्ज्ञेयभावया । क्षीबे हे मत्ते इति । मत्तानां हि दया नोत्पद्यत एवेति भावः । कराभ्यां पुष्पमालां रचयसि दृशा दुर्ज्ञेयभावमालां सृजसि श्रीकृष्णे तु दयां न प्रकटयसि । किं ते चरितमिदमसमञ्जसमिति व्याजस्तुतिः ॥ ४९ ॥ कलहान्तरितां गौरीं प्रति तत्सखी प्राह—**हरिणेति** । तेन गते सति हे शारिके, हरे, कृष्ण, गोविन्देति वदेति शारिकाध्यापनमिषेण पश्चा-

---

मस्यापीति विभ्रमलक्षणस्य परमतत्वाज्ञानेन सांकर्यम् ॥ ४७ ॥ ४८ ॥ ४९ ॥

अथ ललितम्—

विन्यासभङ्गिरङ्गानां भ्रूविलासमनोहरा।
सुकुमारा भवेद्यत्र ललितं तदुदीरितम्॥ ५१॥

यथा—

सभ्रूभङ्गमनङ्गबाणजननीरालोकयन्ती लताः
सोल्लासं पदपङ्कजे दिशि दिशि प्रेङ्खोलयन्त्युज्ज्वला।
गन्धाकृष्टधियः करेण मृदुना व्याधुन्वती षट्पदान्
राधा नन्दति कुञ्जकन्दरतटे वृन्दावनश्रीरिव॥ ५२॥

अथ विकृतम्—

ह्रीमानेर्ष्यादिभिर्यत्र नोच्यते स्वविवक्षितम्।
व्यज्यते चेष्टयैवेदं विकृतं तद्विदुर्बुधाः॥ ५३॥

तत्र ह्रिया यथा—

निशमय्य मुकुन्द मन्मुखाद्भवदभ्यर्थितमत्र सुन्दरी।
न गिराभिननन्द किंतु सा पुलकेनैव कपोलशोभिना॥ ५४॥

---

त्तापजर्जरिता स्वप्राणरक्षार्थं तन्नामामृतमेवावलम्बसे इति सुशिक्षितामिति, स्वयमिति पदयोर्ध्वनिः॥ ५०॥ ५१॥ श्रीराधाप्रसाधनार्थं पुष्पाण्यवचिन्वन् श्रीकृष्णो दूरात्तामवलोक्य वर्णयति—लताः सभ्रूभङ्गं सासूयं पश्यन्ती। अत्र हेतुः **अनङ्गेति**। युष्माकमेव पुष्पाणि बाणान् कृत्वा तैरनङ्गो मां प्रहरतीति यूयमेव मद्वैरिण्य इति भावः। प्रेङ्खोलयन्ती चालयन्ती वृन्दावनस्य श्रीः संपत्तिरिव॥ ५२॥ **विवक्षितमिति**। पूर्वं मोट्टायिते कान्तवार्ताश्रवणेनाभिलाषव्यक्तिः स्वयमेव भवेदत्र तु न व्यक्तं वस्तु चेष्टया व्यज्यत इति भेदः॥ ५३॥ सुबलः श्रीकृष्णमाह—भवतोऽभ्यर्थितं हे प्रेयसि हे राधे, अद्य गोवर्धनकन्दरायां

---

॥५०॥५१॥ प्रेङ्खोलयन्ती चालयन्ती ॥५२॥ **विवक्षितमिति**। पूर्वं मोट्टायितेऽभिलाषस्य व्यक्तिरत्र तु विवक्षितमात्रस्येति भेदः। किंतूदाहरणेषु भावव्यक्तिरेव यद्दृश्यते तद्विवक्षितान्तर्गतत्वात्तेनांशेनैवेति ज्ञेयम्। केवलविवक्षितोदाहरणं

यथा वा—

न परपुरुषे दृष्टिक्षेपो वराक्षि तवोचित-
स्त्वमसि कुलजा साध्वी वक्त्रं प्रसीद विवर्तय ।
इति पथि मया नर्मण्युक्ते हरेर्नववीक्षणे
सदयमुदयत्कार्पण्यं मामवैक्षत राधिका ॥ ५५ ॥

मानेन यथा—

मय्यासक्तवति प्रसाधनविधौ विस्मृत्य चन्द्रग्रहं
तद्विज्ञप्तिसमुत्सुकापि विजहौ मौनं न सा मानिनी ।
किंतु श्यामलरत्नसंपुटदलेनावृत्य किंचिन्मुखं
सत्या स्मारयति स्म विस्मृतमसौ मामौपरागीं श्रियम् ॥५६॥

---

मन्निर्मितं चित्रं द्रष्टुमवश्यमेवावगन्तव्यं यदि मामनुगृह्णासीति पुलकेनैव कस्माच्चिन्मिषाद्दर्शितेन भद्रमागमिष्यामीति ज्ञापयामासेत्यर्थः ॥ ५४ ॥ अत्र पुलकस्य सात्विकत्वेन स्वभावोत्थत्वादस्पष्टचेष्टाभावात् ( तेन ) नायिकाकर्तृकं विज्ञापनमस्पष्टं नेत्याह—**यथा वेति** । विशाखा ललितां प्रति श्रीराधाचरित्रं विज्ञापयन्त्याह—**न परेति** । वक्त्रं विवर्तय परावर्तय । नर्मणि तस्या हृदयज्ञापनार्थमुक्ते सति सदयमानन्दयस्वेति प्रार्थ्यमानत्वेन दया वर्तते यत्र तद्यथा स्यात्तथा । उदयत्कार्पण्यमिति विशेषणसाहचर्यादैक्षतेति तथाभूतेक्षणक्रियैव चेष्टा तया चैकवारमपि श्रीकृष्णमवलोकयितुमाज्ञापयतान्यथा जीवितुमहं न प्रभविष्यामीति स्वविवक्षितं व्यञ्जितम् ॥ ५५ ॥ श्रीकृष्ण उद्धवं प्रत्याह—**मय्यीति** । तस्य चन्द्रग्रहणस्य विज्ञप्तौ संप्रति चन्द्रग्रहणं वर्तते तदितो बहिर्निःसृत्य स्नानदानादिकाः क्रियाः कुर्विति विज्ञापने समुत्सुकापि । **मुखमावृत्येति** । मुखस्य चन्द्रत्वम्, संपुटस्य राहुत्वम् । तेन च दर्शितेनेत्यर्थः । **विस्मितमिति** । अहो बुद्धेरस्याः परा काष्ठा एतज्ज्ञापनमिषेण संप्रसाधनेन निराकृतवतीति मां परास्तीभूतं कृतम्

---

तु मय्यासक्तवतीत्येव ॥ ५३ ॥ ५४ ॥ इति नर्मण्युक्ते सति । सदयं दयासहितं दयाविषयं यथा स्यात्तथा । उदयत् कार्पण्यं यथा स्यात्तथा मामवैक्षत ॥ ५५ ॥

ईर्ष्यया यथा—

वितर तस्करि मे मुरलीं हृतामिति मदुद्धरजल्पविवृत्तया।
भ्रुकुटिभङ्गुरमर्कसुतातटे सपदि राधिकयाहमुदीक्षितः॥ ५७॥

**अलंकारा निगदिता विंशतिर्गात्रचित्तजाः।**
**अमी यथोचितं ज्ञेया माधवेऽपि मनीषिभिः॥ ५८॥**
**कैश्चिदन्येऽप्यलंकाराः प्रोक्ता नात्र मयोदिताः।**
**मुनेरसंमतत्वेन किंतु द्वितयमुच्यते॥ ५९॥**
**मौग्ध्यं च किंचितं चेति किंचिन्माधुर्यपोषणात्।**

तत्र **मौग्ध्यम्**—

**ज्ञातस्याप्यज्ञवत्पृच्छा प्रियाग्रे मौग्ध्यमीरितम्॥ ६०॥**

यथा मुक्ताचरिते—

कास्ता लताः क वा सन्ति केन वा किल रोपिताः।
कृष्ण मत्कङ्कणन्यस्तं यासां मुक्ताफलं फलम्॥ ६१॥

**चकितम्**—

**प्रियाग्रे चकितं भीतेरस्थानेऽपि भयं महत्।**

यथा—

रक्ष रक्ष मुहुरेष भीषणो धावति श्रवणचम्पकं मम।
इत्युदीर्य मधुपाद्विशङ्किता सस्वजे हरिणलोचना हरिम्॥ ६२॥

इत्यलंकारविवृतिः।

---

॥ ५६॥ श्रीकृष्णः सुबलमाह—**वितरेति**। भ्रुकुटिभङ्गुरमिति यत्त्वं मे चोरिकापवादं ददासि तदहमार्यायै सर्वमिदमुक्त्वा सुष्ठु तुभ्यमेतत्फलं दास्यामीति भ्रुकुट्या व्यञ्जितम्॥ ५७॥ कैश्चित्साहित्यदर्पणकृदादिभिरन्येऽपि तपनविक्षेपकुतूहलाद्याः। मुनेर्भरतस्य॥ ५८॥ ५९॥ ६०॥ श्रीसत्यभामा श्रीकृष्णमाह—**कान्ता इति**॥ ६१॥ काचित्सखी कांचिदाह—**रक्ष रक्षेति**। एष मधुपः। यद्यपि

---

॥ ५६॥ विवृत्तया परावृत्तया॥ ५७॥ ५८॥ ५९॥ ६०॥ ६१॥ चम्पकस्य

अथोद्भास्वराः ।

**उद्भासते स्वधाम्नीति प्रोक्ता उद्भास्वरा बुधैः ।**
**नीव्युत्तरीयधम्मिल्लस्रंसनं गात्रमोटनम् ॥ ६३ ॥**
**जृम्भा घ्राणस्य फुल्लत्वं निश्वासाद्याश्च ते मताः ।**

तत्र **नीविस्रंसनं यथा** विदग्धमाधवे—

नैरञ्जन्यमुपेयतुः परिगलन्मोदाश्रुणी लोचने
खेदोद्धूतविलेपनं किल कुचद्वन्द्वं जहौ रागिताम् ।
योगौत्सुक्यमगादुरः स्फुरदिति प्रेक्ष्योदयं संगिनां
राधे नीविरियं तव श्लथगुणा शङ्के मुमुक्षां दधे ॥ ६४ ॥

---

मधुपश्चम्पकं न धावति तथापि स्वमुखामोदेनागतस्य तस्य तथावगमात्तथोक्तम् ॥ ६२ ॥ इत्यलंकारविवृतिः ॥ अथोद्भास्वराः ।

उद्भासन्ते प्रकाशन्ते । 'स्थेशभास–' इत्यादिना वरच् । स्वधाम्नि भाववजनदेहे । आद्यशब्देन विलुठितगीतक्रोशनलोकानपेक्षिता घूर्णाहिक्कादयो ज्ञेयाः ॥ ६३ ॥ गौरीतीर्थे श्रीकृष्णेन सह विहरन्तीं श्रीराधां दूरादालोक्य वृन्दा तां नीचैः संबोध्य वर्णयति—नैरञ्जन्यमञ्जनमुपाधिरविद्या तद्राहित्यम् । संसारान्मोक्षमित्यर्थः । पक्षे निष्कज्जलत्वम् । तत्रोभयत्र हेतुः—**परिगलदिति** । मोदाश्रूणि भक्तिसुखोत्थानि कामसुखोत्थानि च । रागिणां रागो विषयासक्तिस्तद्वत्तां कुङ्कुमरागवत्तां च जहौ । तत्रोभयत्र हेतुः खेदो भक्तिसुखोत्थः कामसुखोत्थश्च तेनोद्धूतं खण्डितं विशिष्टं लेपनं लेपो विषयेन्द्रियसंसर्गः, पक्षे चन्दनकुङ्कुमादिमयी चर्चा यत्र तत् । योगेऽष्टाङ्गयोगे श्रीकृष्णवक्षःस्पर्शे च । तत्रोभयत्र हेतुः स्फुरद्देदीप्यमानं धृतस्पन्दनं चेति सङ्गिनां चतुर्णामुदयं मोक्षसुखसंपत्तिं कामसुखसंपत्तिं च । गुणः सत्त्वादिसूत्रं च । मुमुक्षां मोक्षस्पृहां स्खलनेच्छां च । अत्र नेत्रकुच-

---

मधुपास्पृहणीयत्वेऽपि विलासादेव तथोक्तिरित्यस्थानत्वमिति स्पष्टम् । हल्लकमिति वा पाठः ॥ ६२ ॥ इत्यलंकारविवृतिः ॥ **नैरञ्जन्यमिति** । अत्र श्लेषपक्षे तेषामधिकारिणां क्रमान्न्यूनत्वमवगतम् । तच्च नीव्याः क्रमप्राप्तं प्रथमारम्भं बोधयितुं

**उत्तरीयस्रंसनं** यथा—

तव हृदि मम रागात्कोऽपि रागो गरिष्ठः
स्फुरति तदपसृत्य व्यक्तमेतं करोमि ।
इति खलु हृदयात्ते राधिके रोधकारि
च्युतमिव पुरतो मे मञ्जुमाञ्जिष्ठवासः ॥ ६५ ॥

**धम्मिल्लस्रंसनं** यथा—

स्फुरति मुरद्विषि पुरतो दुरात्मनामपि विमुक्तिदे गौरि ।
नाद्भुतमिदं यदीयुः संयमिनस्ते कचा मुक्तिम् ॥ ६६ ॥

**गात्रमोटनं** यथा—

व्रजाङ्गने बल्लवपुङ्गवस्य पुरः कुरङ्गीनयना सलीलम् ।
अप्यङ्गभङ्गं किल कुर्वतीयमनङ्गभङ्गं तरसा व्यतानीत् ॥ ६७ ॥

---

योर्नीवीनां क्रमेण ज्ञानदौर्बल्यान्मोक्षसुखे कामसुखे च क्रमेणैव न्यूनाधिकारित्वं व्यञ्जितम् ॥ ६४ ॥ श्रीकृष्णः स्वदर्शनेन श्रीराधाया उत्तरीयस्खलनमवलोक्य तां परिहसति—**तवेति** । हे राधे, तव माञ्जिष्ठं मञ्जिष्ठया रक्तं वासः कर्तृ । मम पुरतस्तव हृदयात् इति विचार्य च्युतं निःसृतम् । इवेत्युत्प्रेक्षायाम् । तत्र वासोवदिति मम रागात् रक्तिम्नः सकाशात्, पक्षे क्रोधात्तव हृदि रागः कोऽप्यनिर्वचनीयो रागः स्फुरति । ततस्तस्मादितोऽपसृत्य एतं रागं व्यक्तं लोकदृष्टं करोमीति तेन च प्रेयसि राधे, तव वास ईर्ष्यया चेदपसृतमपसरतु का चिन्ता संप्रति मम हृदयमेव सौहार्देन एतं रागमाच्छादयत्विति सहसा तामालिलिङ्गेति ध्वनिः ॥ ६५ ॥ वृन्दा श्रीराधां सनर्माह—**स्फुरतीति** । संयमिनो वशीकृतेन्द्रियाः, पक्षे बद्धाः ॥ ६६ ॥ नान्दीमुखी वृन्दामाह—व्रजेति । अङ्गभङ्गं गात्रमोटनम् । अनङ्गभङ्गं कन्दर्पतरङ्गम् ॥ ६७ ॥

---

कृतम् । उदयं स्वस्वाधिकारानुरूपप्रकाशम् ॥ ६३ ॥ ६४ ॥ इति वेत्यन्वयः ॥ ६५ ॥ अङ्गभङ्गं गात्रमोटनम्, अनङ्गभङ्गं कामतरङ्गम् ॥ ६६ ॥ ६७ ॥

**जृम्भा** यथा—

पुष्पैरवेत्य विशिखैर्भवतीमसाध्यां
　साध्वीमधीत्य मदनः किल जृम्भणास्त्रम् ।
चन्द्रावलिं प्रसभमेव वशीचकार
　यद्गोष्ठसीमनि मुहुः सखि जृम्भसेऽद्य ॥ ६८ ॥

**घ्राणफुल्लत्वं** यथा—

रचितशिखरशोभारम्भमम्भोरुहाक्षी
　श्वसितपवनदोलान्दोलिना मौक्तिकेन ।
पुटयुगमतिफुल्लं बिभ्रती नासिकायां
　मम मनसि विलग्ना दर्शनादेव राधा ॥ ६९ ॥

**यद्यप्येते विशेषाः स्युर्मोट्टायितविलासयोः ।**
**शोभाविशेषपोषित्वात्तथापि पृथगीरिताः ॥ ७० ॥**

---

श्रीकृष्णश्चन्द्रावलीमाह—**पुष्पैरिति** । असाध्यामवश्यामधीत्य स्वशस्त्रगुरोः सकाशात् पठित्वा स्वयमेवाधिगत्येति वा ॥ ६८ ॥ श्रीकृष्णः सुबलमाह—**रचितेति** । पुटयुगं कीदृशम् । मौक्तिकेन नासालंकारवर्तिना अधरारुण्योपरक्तेन रचितः शिखरस्य पक्वदाडिमबीजाभस्य माणिक्यस्येव शोभारम्भो यत्र तत् । पुटयुगस्य स्वच्छत्वान्मौक्तिकनिष्ठश्वेतिम्नो रक्तिमच्छविलग्नत्वादित्यर्थः । ननु नासालंकारो वामनासापुटाग्रस्थ एव भवेत् कथं पुटयुगं तथाभूतमभूदित्यत आह—श्वसितपवनो निश्वासानिल एव दोला प्रेङ्खा तया आन्दोलनशीलेन । तेनाग्रवर्तिनो मौक्तिकस्यान्दोलनात् पुटद्वयस्यापि तच्छविलग्नत्वसंभवः ॥ ६९ ॥ पृथगित्युद्भास्वरशब्देनोच्यन्त इत्यर्थः । आदिशब्दगृहीतविलुठिताद्युदाहरणानि—'नवानुरागेण तवावशाङ्गी वनस्रगामोदमवाप्य मत्ता । व्रजाङ्गने सा कठिने लुठन्ती गात्रं सुगात्री व्रणयांचकार ॥' इत्यादीनि भक्तिरसामृतादेवावगन्तव्यानि

---

अधीत्येत्यत्र प्रयुज्येति पाठान्तरम् ॥ ६८ ॥ **रचितेति** । श्रीकृष्णस्य भावना । आरम्भशब्दोऽत्र परिपाटीतात्पर्यकः । युगशब्दोऽत्र मौक्तिकस्य तत्तत्पुटमध्य-

अथ वाचिकाः—

आलापश्च विलापश्च संलापश्च प्रलापकः।
अनुलापोऽपलापश्च संदेशश्चातिदेशकः॥ ७१॥
अपदेशोपदेशौ च निर्देशो व्यपदेशकः।
कीर्तिता वचनारम्भा द्वादशामी मनीषिभिः॥ ७२॥

तत्रालापः—

चाटुप्रियोक्तिरालापः

यथा श्रीदशमे—

का स्त्र्यङ्ग ते कलपदामृतवेणुगीत-
संमोहितार्यचरितान्न चले त्रिलोक्याम्।
त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं
यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्॥ ७३॥

---

॥ ७० ॥ ७१ ॥ ७२ ॥ व्रजदेव्यः श्रीकृष्णमाहुः—**का स्त्रीति** । **वेणुगीतेति** । गुणानां मोहनत्वम् । **त्रिलोक्यामिति** । दूरवर्तिनीषु स्त्रीषु निरीक्ष्य । **रूपमिति** । निकटवर्तिनीषु गुणस्य रूपस्य च । ननु केवलं मन्निष्ठयोर्गुणरूपयोरेव मोहनत्वम्, स्त्रीनिष्ठस्य कामस्यापि तत्र साहाय्यदानादि चेत्तत्राहुः—**गोद्विजेति** । गावः पक्षिणो मृगाश्च द्रुमाश्च मुह्यन्तीति तेषां कुतः काम इति । कृपया अस्मानङ्गीकुर्विति भावः । ननु नायिकानां संभोगप्रार्थनामयी चाटुप्रयोक्ती रसाभासस्तस्मादरसिका युष्मानङ्गीकरोमीति चेत्तत्र सरस्वत्येव समादधाति—**गीतसंमोहितेति** । त्वया मुरलीगीतेनोन्माद्य मोहितानामासां स्वभावविपर्ययः कृतः । तेन मधुपानेनोन्मादितानां वधूनां निर्लज्जता संभोगप्रार्थनाद्या न दोषाः प्रत्युत रसावहत्वाद्गुणा एव यथा तथैवासामपीति भावः॥ ७३ ॥

---

स्थलं मर्यादायां कृतं छिद्रमवलम्ब्य बोधयति ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥

यथा वा विदग्धमाधवे—

कठोरा भव मृद्वी वा प्राणास्त्वमसि राधिके ।
अस्ति नान्या चकोरस्य चन्द्रलेखां विना गतिः ॥ ७४ ॥

अथ **विलापः**—

**विलापो दुःखजं वचः ॥ ७५ ॥**

यथा श्रीदशमे—

परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिङ्गला ।
तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया ॥ ७६ ॥

**संलापः**—

**उक्तिप्रत्युक्तिमद्वाक्यं संलाप इति कीर्त्यते ।**

यथा पद्यावल्याम्—

उत्तिष्ठारात्तरौ मे तरुणि मम तरोः शक्तिरारोहणे का
साक्षादाख्यामि मुग्धे तरणिमिह रवेराख्यया का रतिर्मे ।
वार्तेयं नौप्रसङ्गे कथमपि भविता नावयोः संगमार्थी
वार्तापीतिस्मितास्यं जितगिरमजितं राधयाराधयामि ॥७७॥

---

नायकस्य तु चाटुप्रियोक्तिर्नायिकायां स्वत एव सुरसेति वक्तुमाह—**यथा वेति** । चन्द्रलेखामिति द्वितीया । चन्द्रमपि विना किं पुनः पूर्णचन्द्रमिति भावः ॥ ७४ ॥ ७५ ॥ उद्धवयाने गोप्य आहुः—**परमिति** । श्रीकृष्णे आशा तु दुरतिक्रमेति पिङ्गलायाः श्रीकृष्णविषयिण्याशा नासीदिति । तस्या अस्माकमिव न दुःखमिति भावः ॥ ७६ ॥ मानसगङ्गायां नौकाविनोदी श्रीकृष्णः श्रीराधामाह—**उत्तिष्ठेति** । मम तरौ नौकायामुत्तिष्ठ आरोहणं कुरु । ततः श्रीराधा वक्रोक्तिप्रतिभया तरावित्यस्यार्थान्तरं दर्शयन्ती तं प्रत्याह—तरोर्वृक्षस्यारोहणे मम का शक्तिः । श्रीकृष्ण आह—मुग्धे मद्वचनानभिज्ञे, अहं तरणिं नौकामाख्यामि त्वं तरुं कथं प्रत्येषीति भावः । श्रीराधाह—रवेराख्येति । तरणिशब्देन रविं प्रत्येमीति भावः । श्रीकृष्ण आह—इयं नौप्रसङ्गे वार्ता अत्र नौशब्दस्यानेकार्थत्वाभावात् कथमर्थान्तरं कल्पयिष्यसीति । श्रीराधाह—**कथमपीति** । नौप्रसङ्गे आवयोः प्रसङ्गे वार्ता इति

---

अबिभ्रन् अबिभरुः ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ तरावुत्तिष्ठ तरुमधिकृत्यो-

प्रलापः—

व्यर्थालापः प्रलापः स्यात्

यथा—

करोति नादं मुरली रली रली व्रजाङ्गनाहृन्मथनं थनं थनम्।
ततो विदूना भजते जते जते हरे भवन्तं ललिता लिता लिता॥ ७८॥

अनुलापः—

अनुलापो मुहुर्वचः॥ ७९॥

यथा—

कृष्णः कृष्णो नहि नहि तापिच्छोऽयं वेणुर्वेणुर्नहि नहि भृङ्गोद्घोषः।
गुञ्जा गुञ्जा नहि नहि बन्धूकाली नेत्रे नेत्रे नहि नहि पद्मद्वन्द्वम्॥ ८०॥

अपलापः—

अपलापस्तु पूर्वोक्तस्यान्यथा योजनं भवेत्।

---

किं त्वं ब्रूष इति भावः। इति तदनन्तरं स्मितास्यं प्रत्युत्तरदानाशक्तेः। स्मितमेव स्वपराभवगोपनार्थं कुर्वन्तामित्यर्थः॥ ७७॥ मधुपानेनोन्मत्ता श्रीराधा श्रीकृष्णमाह—**करोतीति**। अत्र रली रली थनं थनं जते जते लिता लितेति शब्दा व्यर्थाः॥ ७८॥ ७९॥ बन्धूकस्थलकमलाभ्यां मिलितं कमपि तमालपोतकमालोक्य श्रीराधा ललितां दर्शयन्ती सहर्षौत्सुक्यावेगमाह—**कृष्णः कृष्ण इति**। पश्चात् स्वयमेव विचार्य निश्चिनोति—नहि नहि किंतु तापिच्छस्तमालोऽयम्। एवं पादत्रयेऽपि निश्चयान्तसंदेहोऽयम्। यद्वा प्रथमत एव निश्चिनोति—कृष्णः कृष्ण इति। अतो हि नहि नहि तापिच्छ इति। एवं सर्वत्र॥ ८०॥ पूर्वोक्तस्य प्रथमं स्वेनैवोक्तस्य वाक्यस्य पुनः स्वेनैवान्यथा योजनमन्यार्थकरणमिति संलापादसौ भिद्यते॥ कलहान्तरिता श्रीराधा सौत्सुक्यं रहसि

---

र्ध्वस्थितिं कुर्वित्यर्थः॥ ७७॥ ७८॥ ७९॥ तापिच्छसंगतस्थलपद्मं पुष्पितबन्धूकं च दृष्ट्वा भ्रान्त्या प्रलपन्तीं कांचित् प्रति काचिदाह—**नेत्रे नेत्रे इति**

यथा—

फुल्लोज्ज्वलवनमालं कामयते का न माधवं प्रमदा ।
हरये स्पृहयसि राधे नहि नहि वैरिणि वसन्ताय ॥ ८१ ॥

संदेशः—

**संदेशस्तु प्रोषितस्य स्ववार्ताप्रेषणं भवेत् ॥ ८२ ॥**

यथा—

व्याहर मथुरानाथे मम संदेशप्रहेलिकां पान्थ ।
विकला कृता कुहूभिर्लभते चन्द्रावली क लयम् ॥ ८३ ॥

---

विशाखामाह—**फुल्लेति** । तदैवाकस्मादागत्य ललिता सोपहासमाह—**हरय इत्यादि** । पुनः सभयप्रतिभं श्रीराधा तां प्रत्याह—**नहि नहीति** । हे वैरिणि, इदमपि प्रवादं दातुं त्वं समर्थासि इति भावः । अहं तु वसन्ताय स्पृहयामि । फुल्ला उज्ज्वला वनानां माला श्रेणी यतस्तस्मै माधवायेति । माधवशब्देन मया वसन्त एवाभिप्रेत इति भावः ॥ ८१ ॥ प्रोषितस्य प्रवासगतस्य कान्तस्य स्थाने ॥ ८२ ॥ पद्मा श्रीकृष्णं संदिशति—**व्याहर मथुरानाथ इति** । श्रीनन्दगोकुलं क्लिश्यतु नश्यतु वा तत्र तस्य न कापि क्षतिरिति भावः । किंतु स आत्मानमतिसुबुद्धिमन्तं मन्यत इत्यतो मे प्रहेलिकां वदलिति भावः । कुहूभिरमावास्याभिः कोकिलध्वनिभिश्च विकला कलाहीना वैकल्ययुक्ता च कृता चन्द्रावली चन्द्रश्रेणी तन्नाम्नी गोपी च कुत्र लयं लभत इति । ततश्च तदुत्तररूपं पद्यं श्रीकृष्णेन तस्यै प्रेषितम् । तद्यथा—'चन्द्रावली चेद्विकलीकृता स्यात् कुहूभिराप्नोति हरौ लयं सा । हरिर्विवस्वानघमर्दनश्च लयः क्षयः स्यादुपगूहनं च ॥' इति । तेन प्रहेलिकाप्रेषणमिषेण स्वसख्या दशां ज्ञापयन्तीनां किमुपालभसे अहं तु तत्र शीघ्रं गमिष्यन्नथ च नित्यमेव त्वत्सख्या सह रमे रमयामि च सापि च स्फूर्तिं स्वप्नं वा मन्यत इति सैव चन्द्रावली रहसि तत्त्वतः प्रष्टव्येति ध्वनिः

---

॥ ८० ॥ ८१ ॥ ८२ ॥ **व्याहरेति** । चन्द्रावलीसख्या उक्तिः । कुहूः कोकिलध्वनिरमावास्या च । चन्द्रावली तन्नाम्नी चन्द्रश्रेणी च । विकला वैकल्ययुक्ता कलाहीना च । विकला कृता चेत् तदा क लयं लभत इति प्रश्नः । कृष्णाख्ये

अतिदेशः—

सोऽतिदेशस्तदुक्तानि मदुक्तानीति यद्वचः।

यथा—

वृथा कृथास्त्वं विचिकित्सितानि मा गोकुलाधीश्वरनन्दनात्र।
गान्धर्विकाया गिरमन्तरस्थां वीणेव गीतिं ललिता व्यनक्ति ॥८४॥

अथापदेशः—

अन्यार्थकथनं यत्तु सोऽपदेश इतीरितः ॥ ८५ ॥

यथा—

धत्ते विक्षतमुज्ज्वलं पृथुफलद्वन्द्वं नवा दाडिमी
भृङ्गेन व्रणितं मधूनि पिबता ताम्रं च पुष्पद्वयम्।

---

॥ ८३ ॥ मानिनीं श्रीराधां प्रणत्यादिभिः प्रसादयन्तं श्रीकृष्णं किमिह राधां प्रणमसि इतः शीघ्रमपसर तत्रैव गत्वा तस्या एव पदयोर्मुहुः मुहुः पतेति ललितापरुषोक्त्याप्यागच्छन्तं श्रीराधिकामुखादुदेष्यमाणं किंचन वचनं प्रतीक्षमाणं तं प्रति वृन्दाह—वृथेति। विचिकित्सितानि श्रीराधा स्वमुखेन किंचिन्मधुरं वा मां वक्ष्यतीति वृथा संदेहान् मा कृथाः। 'विचिकित्सा तु संशयः' इत्यमरः। यतो राधाया अन्तरस्थां हृदयस्थां गिरं ललिता स्ववचनेन व्यनक्ति वादयितुश्चित्तस्थं गीतं वीणेव ॥ ८४ ॥ अन्यार्थेनान्याभिधेयेन कथनं प्रस्तुतस्य वस्तुनो यत्सूचनं सोऽपदेश इति। ईरित इतीति समाप्त्यर्थकं लक्षणस्यान्ते योजनीयम्। अन्यथा इतिपदस्य कर्मत्वे ईरितमिति नपुंसकं स्यात् ॥ ८५ ॥ नान्दीमुखी पौर्णमासीं प्रत्याह—**धत्त इति**। विक्षतं विना पक्षिणा शुकेन क्षतं फलद्वयं नवा नवीना

---

पक्षे हराविति तु प्रत्युत्तरमुद्देश्यम् ॥ ८३ ॥ **वृथेति**। स्वयमेव रचयित्वा ललितेयं वदतीति निष्प्रयोजनतया प्रतीतानि विचिकित्सितानि संदेहान्। ललितेति स्वनाम्ना स्वमेवोद्दिष्टम् ॥ ८४ ॥ सोऽपदेशः कथमीरितस्तत्राह—इति। इत्थं तच्च किं तत्राह—अन्यार्थेन अन्येन वाच्येन यत्तु कथनं सूचनं तदित्यर्थः ॥ ८५ ॥ श्यामलानाम्न्यां कथंचित् प्रोषिते पतिंमन्ये कदाचिदेकान्तेऽभ्यञ्जनां कुर्वन्त्यामकस्मादतिसंकोचकारणस्यागमनं ज्ञापयन्ती सखी तच्च तस्मादपलपन्ती चातुरीविशेषेण प्राह—**धत्त इति**। विक्षतं पक्षिक्षतम्। इति सखीगिरमाकर्ण्येति

इत्याकर्ण्य सखीगणं गुरुजनालोके किल श्यामला
चैलेन स्तनयोर्युगं व्यवदधे दन्तच्छदौ पाणिना ॥ ८६ ॥

**उपदेशः—**

**यत्तु शिक्षार्थवचनमुपदेशः स उच्यते ।**

यथा छन्दोमञ्जर्याम्—

मुग्धे यौवनलक्ष्मीर्विद्युद्विभ्रमलोला
त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः ।
तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे
श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥ ८७ ॥

**निर्देशः—**

**निर्देशस्तु भवेत्सोऽयमहमित्यादिभाषणम् ॥ ८८ ॥**

यथा—

सेयं मे भगिनी राधा ललितेयं च मे सखी ।
विशाखेयमहं कृष्ण तिस्रः पुष्पार्थमागताः ॥ ८९ ॥

---

दाडिमीयं धत्ते तथा-भृङ्गेणेत्यादि । व्रणितं व्रणयुक्तीकृतमिति सखीगिरं समवधापयन्त्या सख्या वचनमाकर्ण्य कदा गुरुजनस्य श्वश्र्वा आलोके तत्कर्तृदृष्टिक्षेपे सति व्यवदधे आच्छादयामास । 'अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम्' इत्यमरः ॥ ८६ ॥ तुङ्गविद्या मानिनीं श्रीराधां प्रत्याह—**मुग्धे इति** ॥ ८७ ॥ सोऽयमिति पुंस्त्वेन निर्देशः सामान्यतो जन इत्यपेक्षया ज्ञेयः ॥ ८८ ॥ विशाखा श्रीकृष्णं पृच्छन्तमात्मनः परिचाययति—**सेयमिति** । ततश्च मया पुष्पकेदारिका एतदर्थमेव कृता यद्भवतीनां साध्वीनां देवोपासिकानां प्रत्यहं दर्शनभाग्यं भवेदित्यतो नित्यमेव पुष्पाण्यवचित्य क्षणमस्यां पुष्पशालायां विश्रम्य यथाशक्ति मह्यं पारितोषिकं किंचिद्दत्त्वा गच्छतेति श्रीकृष्णस्य प्रत्युक्तिर्ज्ञेया ॥ ८९ ॥

---

कदा तत्राह—गुरोर्जनस्य दासीलक्षणस्यालोके दूराद्दर्शने सति ॥ ८६ ॥ ८७ ॥

व्यपदेशः—

व्याजेनात्माभिलाषोक्तिर्व्यपदेश इतीर्यते ।

यथा—

विलसन्नवकस्तबका काम्यवने पश्य मालती मिलति ।
कथमिव चुम्बसि तुम्बीमथवा भ्रमरोऽसि किं ब्रूमः ॥ ९० ॥

**अनुभावा भवन्त्येते रसे सर्वत्र वाचिकाः ।**
**माधुर्याधिक्यपोषित्वादिहैव परिकीर्तिताः ॥ ९१ ॥**

इत्यनुभावाः ।

---

अथ सात्त्विकाः—

तत्र स्तम्भः—स हर्षाद्यथा दानकेलिकौमुद्याम्—

अभ्युक्ष्य निष्कं पतयालुना मुहुः
स्वेदेन निष्कम्पतया व्यवस्थिता ।

---

मालत्याः सखी श्रीकृष्णं विपक्षगोपीरतिलालसमवेक्ष्य तदग्रे भृङ्गमाह—**विलसन्नवकेति** । मालती जातिस्तन्नाम्नी गोपी च । स्तबको गुच्छः अतिशयोक्त्या स्तनश्च ॥ काम्यवने पक्षे कामार्हे वने । कामिनस्तवावने पालने इति वा । भ्रमरो भृङ्गः कामुकश्च, श्लेषेण भ्रमं रासीति तुम्बीचुम्बनात् पक्षद्वयेऽपि वैदग्धीलोपादुन्मत्तता सूचिता । एतौ निर्देशव्यपदेशौ दूतीप्रकरणोचितावपि सखीप्रेमानुभावप्रदर्शनार्थमत्रैवोक्तौ ॥ ९० ॥ सर्वत्र रसे शान्तप्रीतादावपि ॥ ९१ ॥ इत्यनुभावविवृतिः ॥

अथ सात्त्विकविवृतिः ॥ श्रीकृष्णो मधुमङ्गलमाह—**अभ्युक्ष्येति** । निष्कं पदकमभ्युक्ष्य पतयालुना पतनशीलेन स्वेदेन निष्कम्पतया पञ्च आलयः सख्यो यस्याः सा । पञ्चालिकाधर्मं पुत्रिकास्वभावं तेन राधिकायाः पञ्चालिका उपमेति

---

॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ इत्यनुभावविवृतिः ॥

अथ सात्त्विकाः । निष्कमभ्युक्ष्य पतयालुना पतनशीलेन स्वेदेन । पञ्च आलयो

पञ्चालिकाकुञ्चितलोचना कथं
पञ्चालिकाधर्ममवाप राधिका ॥ १ ॥

भयाद्यथा—

घनस्तनितचक्रेण चकितेयं घनस्तनी ।
बभूव हरिमालिङ्ग्य निश्चलाङ्गी व्रजाङ्गना ॥ २ ॥

दिग्धोऽयम् ।

आश्चर्याद्यथा—

तव मधुरिमसम्पदं विलक्ष्य त्रिजगदलक्ष्यतुलां मुकुन्द राधा ।
कलय हृदि बलवच्चमत्क्रियासौ समजनि निर्निमिषा च निश्चला च ॥३॥

विषादाद्यथा—

विलम्बमम्भोरुहलोचनस्य विलोक्य संभावितविप्रलम्भा ।
संकेतगेहस्य नितान्तमङ्के चित्रायिता तत्र बभूव चित्रा ॥ ४ ॥

---

ज्ञेयम् । 'पञ्चालिका पुत्रिका स्यात्' इत्यमरः । साक्षाद्रतिभरत्वेन स्तम्भोऽयं स्निग्धो मुख्यः ॥ भयाद्यथा भयमत्र त्रासः ॥ श्रीराधाया मानिन्याश्चेष्टितं दूरादालोक्य नान्दीमुखी पौर्णमासीमाह—घनस्य मेघस्य स्तनितचक्रेण निर्घोषसमूहेन चकिता त्रस्ता । घनस्तनितमिति धनुर्ज्याकरिबृंहितादिवत् । यद्वा । घनेन निबिडेनेति व्याख्येयम् । दिग्धोऽयमिति संचारिभावोत्थत्वात् । यदुक्तम्—'रतिद्वयविनाभूतैर्भावैर्मनस आक्रमात् । जने जातरतौ दिग्धास्ते चेद्रत्यनुगामिनः ॥' इति । रतिद्वयं चात्र शान्त्यादिर्मुख्या हासादिर्गौणीति ॥ २ ॥ श्रीराधां दर्शयन् मधुमङ्गलः श्रीकृष्णं प्रत्याह—**तवेति** ॥ ३ ॥ चित्रायाः सखी स्वसखीमाह—**विलम्बमिति । संभावितेति ।** अद्याहं विप्रलब्धैवाभूवमित्यर्थः ॥ श्यामलायाः

---

यस्याः सा । उत्तरत्र पञ्चालिका प्रतिमा ॥ १ ॥ **भयाद्यथेति** । अत्र भयं त्रासः ॥ २ ॥ **दिग्धोऽयमिति** । अत्र पूर्वग्रन्थोऽन्वेषणीयः । यथोक्तम्—'रतिद्वयं विना भूतैर्भावैर्मनस आक्रमात् । जने जातरतौ दिग्धास्ते चेद्रत्यनुगामिनः ॥' इति । रतिद्वयं चात्र शान्त्यादिर्मुख्या हासादिश्च गौणीति ज्ञेयम्

अमर्षाद्यथा—

माधवस्य परिवर्तितगोत्रां श्यामला निशि गिरं निशमय्य।
देवयोषिदिव निर्निमिषाक्षी छायया च रहिता क्षणमासीत् ॥ ५ ॥

अथ खेदः—स हर्षाद्यथा श्रीविष्णुपुराणे—

गोपीकपोलसंश्लेषमभिपत्य हरेर्भुजौ।
पुलकोद्गमशस्याय स्वेदाम्बुघनतां गतौ ॥ ६ ॥

यथा वा—

ध्रुवमुज्ज्वलचन्द्रकान्तयष्ट्या विधिना माधवनिर्मितास्ति राधा।
यदुदञ्चति तावकास्यचन्द्रे द्रवतां स्वेदभरच्छलाद्बिभर्ति ॥ ७ ॥

भयाद्यथा—

मा भूर्विशाखे तरला विदूरतः पतिस्तवासौ निबिडा लताकुटी।
मया प्रयत्नेन कृताः कपोलयोः स्वेदोदबिन्दुर्मकरीर्विलुम्पति ॥ ८ ॥

---

सखी श्रीराधामाह—**माधवस्येति**। गोत्रं नाम हे प्रिये, पालीत्याकारां गिरम् ॥ ४ ॥ छायया कान्त्या ॥ ५ ॥ पराशरो मैत्रेयमाह—अभिपत्य प्राप्य पुलकोद्गमरूपं शस्यं संपादयितुं स्वेदाम्बुभिर्घनत्वं मेघत्वम्, पक्षे निबिडतां गतौ ययतुः ॥ ६ ॥ ललिता श्रीकृष्णमाह—**ध्रुवमिति**। चन्द्रकान्तशीलयेत्यनुक्त्वा यष्ट्येत्यनेन तस्याः कृशाङ्गत्वं तेन च प्रथमकैशोरं व्यञ्जितम् ॥ ७ ॥ कुञ्जे संभुक्तां विशाखां दैवात् पतिमन्यगोपागमनश्रवणेन बिभ्यतीं प्रसाधयन् श्रीकृष्णः प्राह—**मा भूरिति** ॥ ८ ॥ नान्दीमुखी पौर्णमासीमाह—गोत्रस्खलनेन हे प्रिये

---

॥ ३ ॥ ४ ॥ गोत्रं नाम। छायया कान्त्या। पक्षे स्वव्यवधानकृताता(त)पाभावरूपया। 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः।' इति नानार्थवर्गात् ॥ ५ ॥ अभिपत्य प्राप्य। पुलकोद्गमशस्यं संपादयितुं स्वेदाम्बूनां घनतां मेघतां प्राप्तौ। घनशब्दस्य निबिडवाचित्वं तु प्रकृतम् ॥ ६ ॥ द्रवतीति द्रवत्वद्रूपतां द्रववत्तामित्यर्थः। स्वेदभरच्छलादिति। स्वेदोऽयं न भवति किंतु

क्रोधाद्यथा—

खिन्नापि गोत्रस्खलनेन पाली शालीनभावं छलतो व्यतानीत् ।
तथापि तस्याः पटमार्द्रयन्ती स्वेदाम्बुवृष्टिः क्रुधमाचचक्षे ॥ ९ ॥

अथ **रोमाञ्चः**–स आश्चर्याद्यथा—

चुम्बन्तमालोक्य चमूरुचक्षुषां चमूरमूषां युगपन्मुरद्विषम् ।
व्योमाङ्गणे(ने) तत्र सुराङ्गनावली रोमाञ्चिता विस्तृतदृष्टिराबभौ ॥ १० ॥

हर्षाद्यथा श्रीदशमे—

तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च ।
पुलकाङ्ग्युपगूह्यास्ते योगीवानन्दसम्प्लुता ॥ ११ ॥

यथा वा रुक्मिणीस्वयंवरे—

रोमाणि सर्वाण्यपि बालभावात्प्रियश्रियं द्रष्टुमिवोत्सुकानि ।
तस्यास्तदा कोरकिताङ्गयष्टेरुद्ग्रीविकादानमिवान्वभूवन् ॥ १२ ॥

---

श्यामले, इति श्रीकृष्णकर्तृकसंबोधनेन अन्तः खिन्नाप्यवहित्थया शालीनभावं सौशील्यम् ॥ ९ ॥ श्रीकृष्णस्य रासलीलां पृच्छन्तीं गार्गीं पौर्णमासी प्राह—**चुम्बन्तमिति** ॥ १० ॥ श्रीशुकः परीक्षितमाह—**तमिति** । काचिद्गोपी नेत्ररन्ध्रेण हृदिकृत्येति भाग्यातिशयेन प्राप्तोऽयं पुनरप्यन्तर्धास्यतीति शङ्कयेति भावः ॥ ११ ॥ **स्वयंवर इति** । श्रीकृष्णं प्रति स्वयं लिखितपत्रीद्वारैव स्वयंवरणं ज्ञेयम् । तद्ग्रन्थकृतः श्रीमदीश्वरपुरीश्रीपादाः स्वशिष्यानाहुः—**रोमाणीति** । तस्याः श्रीरुक्मिण्या बालभावात् बालत्वात् । अत्र केशवाचकबालशब्दे स्वसजातीयानि रोमाणि लक्ष्यन्ते ततश्च बालभावात् बालकत्वादिव गाम्भीर्यातिशयोक्तेः प्रियश्रियं सुनन्दाख्यब्राह्मणमुखाच्छ्रुतस्यागतस्य प्रियस्य श्रीकृष्णस्य श्रियं शोभां द्रष्टुमुत्सुकानि । उद्गता ग्रीविका अनुकम्पार्थकप्रत्ययेन सुकुमारा ग्रीवेत्यर्थः । तस्या

---

तद्द्रव इत्यर्थः ॥ ७ ॥ ८ ॥ शालीनभावं मृदुचेष्टाम् ॥ ९ ॥ योगीव संयोगीव यथा स्यात्तथास्ते स्म ॥ १० ॥ ११ ॥ **बालभावादिति** । बालकेशस्तत्सजातीयत्वादत्र रोमस्वपि बालत्वमारोप्यते । ततश्चार्भकसमानपर्यायतया

भयाद्यथा—

परिमलचटुले द्विरेफवृन्दे मुखमभिधावति कम्पिताङ्गयष्टिः।
विपुलपुलकपालिरद्य पाली हरिमधरीकृतह्रीधुरालिलिङ्ग॥१३॥

अथ स्वरभङ्गः—स विषादाद्यथा श्रीगीतगोविन्दे—

विपुलपुलकपालिः स्फीतसीत्कारमन्त-
र्जनितजडिमकाकुव्याकुलं व्याहरन्ती।
तव कितव विधायामन्दकन्दर्पचिन्तां
रसजलनिधिमग्ना ध्यानलग्ना मृगाक्षी॥ १४ ॥

विस्मयाद्यथा—

गुरुसंभ्रमस्तिमितकण्ठया मया
करसंज्ञयापि बहुधावबोधिता।
न पुरस्त्वमत्र हरिवेणुवादने
पुलकान् विलोकितवती लतास्वपि॥ १५ ॥

---

दानमर्पणमिव रोमाणि श्रीकृष्णं द्रष्टुं ग्रीवामुच्चीचक्रुरित्यर्थः ॥ १२ ॥ पाल्याः सखी स्वसखीराह—**परिमलेति** ॥ १३ ॥ वासकसज्जायाः श्रीराधायाः सखी श्रीकृष्णं प्रति तदप्राप्तिजनितं तस्या अनुतापं ज्ञापयन्ती सोपालम्भमाह—**विपुलेति। हे कितव इति।** तव धूर्तताद्य फलन्ती त्वां स्त्रीवधभागिनं करिष्यतीति भावः। जडिम्ना यः काकुस्तेन व्याकुलं सगद्गदमित्यर्थः। कुलधर्मलज्जादिकं यदत्यजं तत्फलमिदमेव यदत्र जाज्वलीमीति व्याहरन्ती। रसजलनिधौ विषसमुद्रे। 'शृङ्गारादौ विषे वीर्ये गुणे रोगे द्रवे रसः।' इत्यमरः॥ १४ ॥ श्रीराधा ललितामाह—गुरुसंभ्रमोऽभिसारार्थमावेगस्तेन स्तिमितः स्तब्धः कण्ठो यस्यास्तया। अतः स्पष्टं वक्तुमसामर्थ्यात् करसंज्ञया हस्तचालनेनापि। 'संज्ञा स्याच्चेतना

---

तत्स्वभावादिव। उद्गता ग्रीवा सैव उद्ग्रीविका तस्या दानं तत्रार्पणं तदेवान्वभूवन् स्त्रीचक्रुरित्यर्थः॥ १२ ॥ तव ध्यानलग्ना सती अमन्दकन्दर्पचिन्तां विधाय रसजलनिधिमग्नासीदिति योज्यम्। तन्निमग्नत्वे लक्षणम्—**विपुलपुलकेत्यादि**

अमर्षाद्यथा—

प्रेयस्यः परमाद्भुताः कति न मे दीव्यन्ति गोष्ठान्तरे
तासां नोज्ज्वलनर्मभङ्गिभिरपि प्राप्तोऽस्मि तुष्टिं तथा ।
द्वित्रैरद्य मुहुस्तरङ्गदधरग्रस्तार्धवर्णैर्यथा
राधायाः सखि रोषगद्गदपदैराक्षेपवाग्बिन्दुभिः ॥ १६ ॥

हर्षाद्यथा रुक्मिणीस्वयंवरे—

पश्येम तं भूय इति ब्रुवाणां सखीं वचोभिः किल सा ततर्ज ।
न प्रीतिकर्णेजपतां गतानि विदांबभूव स्वरवैकृतानि ॥ १७ ॥

---

नाम हस्ताद्यैश्चार्थसूचना ।' इत्यमरः ॥ १५ ॥ राधया सह संकीर्णसंभोगानन्तरं कदाचिद्रहसि श्रीकृष्णो विशाखां प्रति सरसोद्गारमाह—**प्रेयस्य इति** । आक्षेपवाचां भोः करालिकानप्त्रीक्रीडाकुरङ्गकपटकुटिलनटीसूत्रधार, मन्नेत्रवीथीं मा दूषय त्वरितमपसरेत्यादिलक्षणानां बिन्दुभिः कणैरित्यनेन वाचामम्तनदीत्वमारोपितम् । कीदृशैः । रोषेण गद्गदयुतानि अस्पष्टानि पदानि सुप्तिङन्तानि येषु तैः । तत्रापि तरङ्गन् तरङ्ग इवाचरन् । कम्पमान इत्यर्थः । एवंभूतं योऽधरस्तेन ग्रस्ता म्लिष्टा अर्धार्धा वर्णा येषु तैः । अत्र रोष इत्यस्य व्यभिचारिणः स्वशब्दवाच्यत्वं नाम दोषो नाशङ्कनीयः । गद्गदेत्यादीनां तदनुभावानां हेतुत्वेन तस्य वाच्यतयैव हेत्वलंकारस्य स्वभावोक्तेश्चोपस्थापकत्वेन चमत्काराधिक्यपोषणात् । न तु जातगद्गदपदैरिति पाठे तस्य गम्यमानत्वेन तथा चमत्कार इति ध्येयम् । न च व्यभिचारिरसस्थायिभावानां शब्दवाच्यतेतिलक्षणस्य सार्वत्रिकत्वमालंकारिकैरभिमतम् । यदुक्तं काव्यप्रकाश एव—'न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित् ।' इति ॥ १६ ॥ तद्ग्रन्थकृत एवाहुः—**पश्येमेति** । हे सखि रुक्मिणि, किं व्यग्रासि एहि, केनचिन्मिषेण तं भूयः पश्येम इति 'अस्मदो द्वयोश्च' इति बहुलम् । **वचोभिरिति** । हे लम्पटे सखि, किं निजधर्मं परमुण्डे पातयसि,

---

॥ १३ ॥ १४ ॥ १५ ॥ **रोषगद्गदपदैरिति** । अत्र 'जातगद्गदपदैः' इति वा पाठः । पदमत्र व्यवसायः । 'पदं व्यवसित' इत्यादि नानार्थवर्गात् ॥ १६ ॥ तं भूयः पश्येमेत्यस्य मा व्यग्रा भूदित्याक्षेपलभ्यम् । भूय इति तस्यैव कवेः प्रबन्धानुसारेण पूर्वमपि दर्शनं जातमिति ज्ञेयम् । कर्णेजपः सूचकः ॥ १७ ॥

भीतेर्यथा—

प्रथमसंगमनर्मणि साध्वसस्खलितयापि गिरा सखि राधिका।
नवसुधाह्लादिनीं मदिरेक्षणा श्रुतितटे मम कांचिदवीवहत् ॥१८॥

अथ वेपथुः—स त्रासेन यथा—

केशवो युवतिवेशभागयं बालिशः किल पतिस्तवाग्रतः।
राधिके तदपि मूर्तिरद्य ते किं प्रवातकदलीतुलां दधे ॥ १९ ॥

हर्षेण यथा—

बल्लवराजकुमारे मिलिते पुरतः किमात्तकम्पासि।
तव पेशलासि पार्श्वे ललितेयं परिहरातङ्कम् ॥ २० ॥

---

त्वं स्वयमेव स्पष्टं पश्येत्यवहित्थया श्रीकृष्णदर्शने प्रीत्यभावं व्यञ्जयन्ती सा रुक्मिणी प्रीतेः कर्णेजपतां सूचकत्वं गतानि प्राप्तानि स्वरवैकृतानि कण्ठस्वरभेदान् न विदांबभूव नानुसंधत्ते स्म। सा वचसा स्वप्रेमाणं गोपयामास। वचस्तु तस्याः प्रेमाणं स्पष्टयामास इति सा परमामर्षेत्यर्थः॥ 'कर्णेजपः सूचकः स्यात्' इत्यमरः। 'उषविद–' इत्यादिना लिट्याम् ॥ १७ ॥ श्रीकृष्णो विशाखामाह—प्रथमसंगमे संभोगस्य प्रथमदिने सखि पद्मिनि, मधुपमिममतितृष्णार्तं दयस्व स्वमकरन्ददानादनुमन्येति मया कृते सुरतप्रार्थनसमये नर्मणि यत् साध्वसं भयं तेन स्खलितया गिरा नहि नहीति वाचा। मदिरेक्षणा खञ्जनाक्षीति कटाक्षेण दत्तानुमतिः सा अवीवहत् वाहयामास ॥ १८ ॥ कदाचिज्जटिलया निरुध्यमानत्वाद्दिवसेऽभिसर्तुमक्षमायाः श्रीराधायाः पार्श्वे श्री(स्त्री)वेषधारिणि आगत्योपविष्टवति अकस्मादभिमन्यौ च तदैव गृहं किंचित्कार्यार्थं प्रविष्टवति भीतां श्रीराधां विशाखा नीचैराह—**केशव इति**। बालिशो निर्बुद्धिर्न किंचिदप्यूहितुं शक्त इत्यर्थः। प्रकृष्टो वातो यस्यां कदल्यां तत्तुलाम् ॥ १९ ॥ पुष्पमवचिन्वतीं श्रीराधां ललिताह—**बल्लवेति**। पेशला चतुरा ॥ २० ॥ श्रीकृष्णो मानिनीं

---

॥१८॥ बालिशो मूर्खः। न किंचिदूहितुं शक्त इत्यर्थः। प्रकृष्टो वातो यस्यां कदल्यां

अमर्षेण यथा—

यदि कुपितासि न पद्मे किं तनुरुत्कम्पते प्रसभम् ।
विचलति कुतो निवाते दीपशिखा निर्भरस्निग्धा ॥ २१ ॥

अथ वैवर्ण्यम्—तद्विषादाद्यथा—

मधुरिमभरैर्मुक्तस्यालं कलङ्कितकुङ्कुमै-
द्विरदरदनश्येनीमाभां चिराय वितन्वतः ।
विधुरपि तुलामाप्तस्तस्या मुखस्य बकीरिपो
वद परमतः सारङ्गाक्ष्याः किमस्ति विडम्बनम् ॥ २२ ॥

रोषाद्यथा—

विलसति किल वृन्दारण्यलीलाविहारे
कथय कथमकाण्डे ताम्रवक्त्रासि वृत्ता ।

---

श्रीपद्मां प्रत्याह—**यदीति** । निवाते निर्वातप्रदेशे इत्यर्थः । नीत्युपसर्गः कदाचिन्निवृत्त्यर्थे वर्तते । 'यथा दीपो निवातस्थो नेङ्गते' इत्यादौ 'निवातदीपस्तिमितेन चक्षुषा' इति रघुवंशकाव्ये च । 'निवाते ये गुणाः प्रोक्तास्ते गुणाः कर्णबन्धने ।' इति वैद्यके च ॥ २१ ॥ विप्रलब्धायाः श्रीराधायाः सखी श्रीकृष्णमाह—**मधुरिमेति** । द्विरदो हस्ती श्येनीं श्वेतां तस्या मुखस्य साहजिकमाधुर्येऽपसृते सति वैवर्ण्येन पाण्डिमन्युद्भूते सति । **विधुरपीत्यादि** । अन्यथा विद्युद्वर्णो विधुस्त्रिलोक्यां क्वास्ते येन तदुपमा स्यादिति वदेत्यादिना विडम्बनं तु तस्यास्त्वया उत्पादितमेव, संप्रत्यग्रे दशमी दशैवावशिष्यते इत्याह—बकीरिपो पूतनाघातिन्, स्त्रीवधेऽपि तव भयं नास्तीति भावः । प्रतीपनामायमलंकारः । तल्लक्षणम्—'आक्षेपमु(उ)पमानस्य प्रतीपं भण्यते बुधैः' इति ॥ २२ ॥ स्वप्रतिबिम्बं श्रीकृष्ण-

---

तत्तुलाम् ॥ १९ ॥ पेशला चतुरा ॥ २० ॥ निवाते वातप्रवेशरहिते देशे । निवातकवचशब्दवत् प्रयोगः दृश्यते च 'यथा दीपो निवातस्थो नेङ्गते' इत्यादौ ॥ २१ ॥ श्येनी श्वेतवर्णा । तस्याः सारङ्गाक्ष्या इति तच्छब्देन वैशिष्ट्यव्यक्तिः । अत एव विधुतुलितत्वं धिक्कृतं स्यात् ॥ २२ ॥ वृन्दारण्ये या

प्रसरदुदयरागग्रस्तपूर्णेन्दुबिम्बा
किमिव सखि निशीथे शारदी जायते द्यौः ॥ २३ ॥

भीतेर्यथा—

क्रीडन्त्यास्तटभुवि माधवेन सार्धं
तत्रारात्पतिमवलोक्य विक्लवायाः[1] ।
राधायास्तनुमनु कालिमा तथासी-
त्तेनेयं किमपि यथा न पर्यचायि ॥ २४ ॥

अथाश्रु—तद्धर्षाद्यथा गीतगोविन्दे—

अतिक्रम्यापाङ्गं श्रवणपथपर्यन्तगमन-
प्रयासेनेवाक्ष्णोस्तरलतरतारं पतितयोः ।

---

वक्षसि विलोक्य कान्तान्तरभ्रमेण मानवतीं श्रीराधां श्रीकृष्ण आह—**विलसतीति**। वृन्दारण्यलीलासु यो विहारः संप्रयोगलक्षणस्तत्र अत एवाकाण्डे अनवसरे ताम्रवक्त्रा। कोपवतीत्यर्थः। निशीथे अर्धरात्रे द्यौः किमिव कथं प्रसरदित्यादिलक्षणा जायते। नैव जायत इत्यर्थः। पूर्णेत्यर्धचन्द्रव्यावृत्तिः, शारदीति विद्युदाभादिदोषव्यावृत्तिः ॥ २३ ॥ वृन्दा पौर्णमासीं प्रत्याह—**क्रीडन्त्या इति**। तनुमनु तनावित्यर्थः। किमपि किंचिदपि न पर्यचायि न परिचिता। श्रीराधायाः किंचिदपि लक्षणं तेन पतिमन्येन न दृष्टमित्यर्थः ॥ २४ ॥ श्रीजयदेवकविचूडामणिः प्राह—**अतीति**। तदानीं श्रीराधाया हर्षाश्रुनिकरः अक्ष्णोः प्रस्वेदाम्भःप्रसर इव पपात। अक्ष्णोः प्रस्वेदकारणं श्रममुत्प्रेक्षते। अपाङ्गमतिक्रम्योल्लङ्घ्य श्रवणपथपर्यन्तं यद्गमनं तेन यः प्रयासः श्रमस्तेनैव। अक्ष्णोः कथंभूतयोः।

---

लीला सुखपूर्विका चेष्टा तया यो विहार इतस्ततो भ्रमणं तस्मिन्। द्यौः किमिव कथं निशीथेऽर्धरात्रे प्रसरदित्यादिलक्षणा जायते तत्र तत्रागम्याभावात्। **शारदीति**। तत्र विद्युदादिदोषाभावेन नान्यथापि संभवतीति भावः ॥ २३ ॥ तेन पत्या। किमपीति किंचिदपीत्यर्थः। दरचे (?) ति वा पाठः ॥ २४ ॥ तदानीं यः प्रियतमसमालोकसमयस्तदवसरस्तस्मिन्। राधाया अक्ष्णोर्हर्षाश्रुनिकरः पपात।

---

1. 'कातरायाः' इति ख. पुस्तके पाठः.

तदानीं राधायाः प्रियतमसमालोकसमये
पपात स्वेदाम्भःप्रसर इव हर्षाश्रुनिकरः ॥ २५ ॥

**फुल्लगण्डं सरोमाञ्चं बाष्पमानन्दजं मतम् ।**

**रोषाद्यथा**—

प्रातर्मुरद्विषमुरःस्फुरदन्यनारी-
पत्राङ्कुरप्रकरलक्षणमीक्षमाणा ।
अप्रोच्य किंचिदपि कुञ्चितदृष्टिरेषा
रोषाश्रुबिन्दुभरमिन्दुमुखी मुमोच ॥ २६ ॥

यथा वा बिल्वमङ्गले—

राधेऽपराधेन विनैव कस्मादस्मासु वाचः परुषा रुषा ते ।
अहो कथं ते कुचयोः प्रथन्ते हारानुकारास्तरलाश्रुधाराः ॥२७॥

**शिरःकम्पि सनिश्वासं स्फुरदोष्ठकपोलकम् ।**
**कटाक्षभ्रुकुटीवक्रं स्त्रीणामीर्ष्योत्थरोदनम् ॥ २८ ॥**

**विषादाद्यथा**—पद्यावल्याम्—

मलिनं नयनाम्बुधारया मुखचन्द्रं करभोरु मा कुरु ।
करुणावरुणालयो हरिस्त्वयि भूयः करुणां विधास्यति ॥२९॥

---

तरलतरा तारा यत्र तद्यथा स्यादेवं पतितयोः । तस्याधिकरणं श्रीकृष्णमुखचन्द्र एवाक्षेपलब्धं प्रविश पिण्डीमितिवत् ॥ २५ ॥ खण्डिताया इन्दुमुख्याः सखी स्वसखीमाह—**प्रातरिति** ॥ २६ ॥ श्रीराधायामुदाहर्तुमाह—**यथा वेति ।** श्रीकृष्णः खण्डितां श्रीराधामाह—**राधे इति** ॥ २७ ॥ २८ ॥ प्रोषितभर्तृकां श्रीराधां विशाखा प्राह—**मलिनमिति** ॥ २९ ॥ श्रीराधायाः श्रीकृष्णदर्श-

---

कः इव। स्वेदाम्भःप्रसर इव । स्वेदप्रसरसंभावनायाः को हेतुः । तत्राह—**अक्ष्णोरिति**वर्जेन पूर्वार्धेन । पतितयोर्गतयोः । 'पत्लृ गतौ' ॥ २५ ॥

अथ प्रलयः—स सुखेन यथा—

जङ्घे स्थावरतां गते परिहृतस्पन्दा द्वयी नेत्रयोः
कण्ठः कुण्ठितनिस्वनो विघटितश्वासा च नासापुटी ।
राधायाः परमप्रमोदसुधया धौतं पुरो माधवे
साक्षात्कारमिते मनोऽपि मुनिवन्मन्ये समाधिं दधे ॥३०॥

दुःखेन यथा—ललितमाधवे—

दंशः कंसनृपस्य वक्षसि रुषा कृष्णोरगेणार्प्यतां
दूरे गोष्ठतडागजीवनमितो येनापजह्रे हरिः ।
हा धिक् कः शरणं भवेन्मृदि लुठद्गात्रीयमन्तःक्लमा-
दाभीरीशफरीततिः शिथिलितश्वासोर्मिरामीलति ॥ ३१ ॥

अथैषु धूमायिताः—

सुराङ्गने सखि मधुरापुराङ्गने(णे)
पुरः पुरातनपुरुषस्य वीक्षया ।

---

नानन्दं श्रीललिता विशाखया सहास्वादयति—जङ्घे इति । साक्षात्कारमिते प्राप्ते । मन्ये इति सर्वत्र योज्यम् ॥ ३० ॥ पौर्णमासी कंसमभिशपति—दंश इति । जीवनं जीवनरूपं, पक्षे जलम् । आमीलति दशमीं दशां प्राप्नोति ॥ ३१ ॥ 'प्रायो धूमायिता एव रूक्षास्तिष्ठन्ति सात्त्विकाः ।' इति पूर्वग्रन्थोक्तेर्व्रजपुरदेवीषु धूमायिता न संभवन्तीति देवीषु तानुदाहरति—सुराङ्गने इति । धूमायितलक्षणं च पूर्वग्रन्थ एव । यथा "अद्वितीया अमी भावा अथवा सद्वितीयकाः । ईषद्व्यक्ता अपह्नोतुं शक्या धूमायिता मताः ॥" इति । काचित् सिद्धवनिता कामपि विमानचारिणीं देवीं सनर्माह—सुराङ्गने इति ।

---

बाष्पमत्र नायिकायामेव ज्ञेयम् ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ मुनिवत् मुनिरिवेति सर्वत्र योज्यम् ॥ ३० ॥ दंश इति । पौर्णमास्या वचनम् । अत्र गोष्ठस्य तडागत्वेन रूपकम् । जीवनशब्दस्य च श्लिष्टतया प्रयोगो लभ्यते ।

तवाक्षिणी जलकणसाक्षिणी कुतः
कथं पुनः पुलकि च गण्डमण्डलम् ॥ ३२ ॥

**ज्वलिताः—**

सखि स्तब्धीभावं भजति नितरामूरुयुगलं
तनूजाली हर्षं युगमपि तवाक्ष्णोः सरसताम् ।

---

त्वं सुरस्याङ्गना अथ च पुरातनपुरुषस्य श्रीकृष्णस्य वीक्षया तव भावः । ननु किं मे भावलक्षणं पश्यसि तत्राह—तवाक्षिणी जलकणानामश्रूणां साक्षिणी । यद्यपि त्वमश्रूणि निरुणत्सि तदपि तवाक्षिणी एव औच्छून्यचाकचिक्याभ्यां स्वान्तःस्थितानश्रुकणान् ज्ञापयत एवेत्यर्थः । तेन तवावहित्था एव कामस्पृहां सूचयन्ती त्वां हास्यास्पदीकरोति न त्वश्रुपुलकादिकमिति भावः ॥ ३२ ॥ **ज्वलिता इति** । तल्लक्षणं यथा—'द्वौ वा त्रयो वा युगपद्यान्तः सुप्रकटां

---

तत्र गोष्ठपक्षे जीवनं जीवद्दशा । तडागपक्षे जलम् । तत्र च सति गोष्ठशब्देन तत्स्थाः प्राणिन उच्यन्ते । श्रीकृष्णरूपजीवने हृते सति सर्वेषामेव जीवद्दशायामपगतायामामीरीशफरीणां शिथिलितश्वासोर्मिमात्रत्वं न स्यात् । अपि तु नष्टश्वासोर्मिलमेव स्यात् । सति च पूर्वत्वे गोष्ठस्थप्राणिमात्रेभ्य आसां वैशिष्ट्यं न स्यात् । तस्माद्गोष्ठशब्देन तद्वासस्थानमेव वाच्यम् । तस्य च वाच्यत्वे जीवनशब्देन याथातथ्येन तदीया स्थितिरुच्यते । तदपहारेण च वैतथ्येन स्थितिरिति । स्थिते(ती) ते च श्रीकृष्णस्थितिरूपे एव ज्ञापिते । ततः श्रीकृष्णापहारे तु जाते तत्रस्था तेऽन्ये प्राणिनस्तेषां कंचित्कालमपि स्थितिः स्यात् । आभीराणां तु न स्यादिति तासामतिकोमलतासूचकेन शफरीरूपकेण बोधितम् ॥ ३१ ॥ **धूमायिता इति** । तल्लक्षणं पूर्वग्रन्थे—'अद्वितीया अमी भावा अथवा सद्वितीयकाः । ईषद्व्यक्ता अपह्नोतुं शक्या धूमायिता मताः ॥' इति ॥ पुराणपुरुषस्य वीक्षय तावत् सर्वेषामस्त्रादिकं भवत्येव । किंतु तत्र भावभेदाः सन्ति भवत्यास्तु को भावस्तत्र हेतुरिति सुराङ्गन इत्यादिकस्यायमभिप्रायः । श्लेषेण तु पुराणपुरुषस्येत्यत्र नर्मव्यञ्जना वृद्धवाचित्वात् । जलकणः साक्षी विद्यमानो ययोस्तादृशे । साक्षाद्द्रष्टरि संज्ञायामिति साक्षिपदसाधनसूत्रम् । साक्षी च विद्यमानो भवतीति तत्रैव पर्यवसीयते ॥ ३२ ॥ **ज्वलिता इति** । तल्लक्षणं चोक्तम्—'द्वौ वा त्रयो वा युगप-

तदुन्नीतं धन्ये रहसि करपङ्केरुहतलं
प्रपन्नस्ते दिष्ट्या नलिनमुखि नीलो निधिरभूत् ॥ ३३ ॥

अथ दीप्ताः—यथा विदग्धमाधवे—

क्षोणिं पङ्किलयन्ति पङ्कजरुचोरक्ष्णोः पयोबिन्दवः
श्वासास्ताण्डवयन्ति पाण्डुवदने दूरादुरोजांशुकम्।
मूर्तिं दन्तुरयन्ति संततममी रोमाञ्चपुञ्जाश्च ते
मन्ये माधवमाधुरीश्रवणयोरभ्याशमभ्याययौ ॥ ३४ ॥

उद्दीप्ताः—

स्नाता नेत्रजनिर्झरेण दधती स्वेदाम्बुमुक्तावलिं
रोमाञ्चोत्करकञ्चुकेन निचिता श्रीखण्डपाण्डुद्युतिः।
खञ्जन्मञ्जुलभारती सवयसा युक्ता स्फुरन्तीत्यसौ
सज्जा ते नवसंगमाय ललिता स्तम्भाश्रिता वर्तते ॥ ३५ ॥

---

दशाम्। शक्याः कृच्छ्रेण निह्नोतुं ज्वलिता इति कीर्तिताः ॥' इति धन्यां प्रति तत्सखी प्राह—**सखीति**। स्तब्धीभाव इति स्तम्भः। तनुजाली रोमश्रेणी। हर्षमिति रोमाञ्चः। सरसतामित्यश्रु। 'नीलो निधिः' पक्षे श्रीकृष्णः ॥ ३३ ॥ **दीप्ता इति**। तल्लक्षणं यथा—'प्रौढास्त्रिचतुरा व्यक्तिं पञ्च वा युगपद्गताः। संवरीतुमशक्यास्ते दीप्ता धीरैरुदाहृताः ॥' विशाखा श्रीराधामाह—**क्षोणिमिति**। दन्तुरयन्ति नतोन्नतं कुर्वन्ति। 'दन्तुरं तु नतोन्नतम्' इत्यमरः। अभ्याशं निकटम् ॥ ३४ ॥ **उद्दीप्ता इति**। 'एकदा व्यक्तिमापन्नाः पञ्चषाः सर्व एव वा। आरूढाः परमोत्कर्षमुद्दीप्ता इति कीर्तिताः ॥' विरहिण्या ललिताया दशामुद्धवः श्रीकृष्णमाह—**स्नातेति**। संप्रति तां प्रोषितभर्तृकां वासक-

---

यान्तः सुप्रकटां दशाम्। शक्याः कृच्छ्रेण निह्नोतुं ज्वलिता इति कीर्तिताः ॥' ॥ ३३ ॥ **दीप्ता इति**। तल्लक्षणं चोक्तम्—'प्रौढास्त्रिचतुरा व्यक्तिं पञ्च वा युगपद्गताः। संवरीतुमशक्यास्ते दीप्ता धीरैरुदाहृताः ॥' इति ॥ दन्तुरयन्ति

उद्दीप्तानां भिदा एव सूद्दीप्ताः सन्ति कुत्रचित् ।
सात्त्विकाः परमोत्कर्षकोटिमत्रैव बिभ्रति ॥ ३६ ॥

यथा—

स्वेदैर्दर्शितदुर्दिना विदधती बाष्पाम्बुभिर्निस्तृषो
वत्सीरङ्गरुहालिभिर्मुकुलिनीफुल्लाभिरामूलतः ।
श्रुत्वा ते मुरलीं तथाभवदियं राधा यथाराध्यते
मुग्धैर्माधव भारतीप्रतिकृतिभ्रान्त्याद्य विद्यार्थिभिः ॥ ३७ ॥

इति सात्त्विकाः ।

---

सज्जात्वेनोत्प्रेक्षते । तव नवसंगमाय सज्जा । तत्र वासकसज्जायाः स्वतनोः प्रियसंगमोचितभूषणवस्त्रादिशोभा अपेक्षितेति प्रथमं स्नानमाह—**स्नातेति ।** स्वेदाम्बुन्येव मुक्तावलीत्यलंकारपरिधानं श्रीखण्डेन चन्दनचर्चया पाण्डुवर्णा द्युतिर्यस्याः सा, पक्षे त्वद्विरहेण श्रीखण्डस्येव द्युतिर्वैवर्ण्यम् । स्वजन्ती अर्धार्धं निःसरन्ती मञ्जुला सा भारती स्फूर्तिप्राप्तेन त्वया सह वाणी सैव सवयाः सखी तया युक्तेति सखीसाहित्यम् । स्तम्भः सात्त्विकः, कुञ्जगृहस्थूणा च ॥ ३५ ॥ ॥ ३६ ॥ गृहादभिसृत्य पूर्वाह्णे वनपथे चलन्तीमकस्मान्मुरलीनादेन सूद्दीप्तसात्त्विकभावां श्रीराधामालोक्य दूती जवेन श्रीकृष्णान्तिकमासाद्य तमाह—स्वेदैरेव दर्शितं दुर्दिनं यया इति स्वेदानां मेघत्वं निरन्तरतद्बिन्दुपातानां वृष्टित्वम् । बाष्पाम्बुभिरश्रुजलैर्वत्सीस्तर्णकान् निस्तृषो विगतपिपासाः कुर्वतीत्यश्रूणां निर्झरजलप्रवाहत्वम् । वत्सीरित्यल्पाख्यायां स्त्रीप्रत्ययः । "स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि" इत्यमरः ॥ अङ्गरुहालिभिः रोमश्रेणिभिः । तदैव ते मुरलीनादं श्रुत्वा अतिजाड्येनातिस्तब्धा अतिविवर्णा चाभूदित्याह—**श्रुत्वेति ।** यथा तदानीमेवागतैर्विद्यार्थिभिरहो सरस्वतीप्रतिमेयमिति मुग्धे स्तम्भस्थितिमभ्यां भ्रान्तैराराध्यते पाद्यार्घ्यधूपादिभिः पूज्यते इति । अत्र जाड्याख्यस्तम्भोदयः प्रथमक्षण एव प्रस्वेदाश्रुरोमाञ्चस्तम्भवैवर्ण्यानां पञ्चानां सात्त्विकानामाधिक्येन

---

नतोन्नतं कुर्वन्ति ॥ ३४ ॥ **उद्दीप्ता इति ।** 'एकदा व्यक्तिमापन्नाः पञ्चषाः सर्वे एव वा । आरूढाः परमोत्कर्षमुद्दीप्ता इति कीर्तिताः ॥' स्तम्भशब्दः श्लिष्टः

अथ व्यभिचारिणः।

निर्वेदाद्यास्त्रयस्त्रिंशद्भावा ये परिकीर्तिताः।
औग्र्यालस्ये विना तेऽत्र विज्ञेया व्यभिचारिणः ॥ १ ॥
सख्यादिषु निजप्रेमाप्यत्र संचारितां व्रजेत्।
साक्षादङ्गतया नेष्टाः किंत्वत्र मरणादयः ॥ २ ॥
वर्ण्यमानास्तु युक्त्यामी गुणतामुपचिन्वते।

तत्र निर्वेदः—स महार्त्या यथा विदग्धमाधवे—

यस्योत्सङ्गसुखाशया शिथिलिता गुर्वी गुरुभ्यस्त्रपा
प्राणेभ्योऽपि सुहृत्तमाः सखि तया(था) यूयं परिक्लेशिताः।

---

युगपदुद्भूतत्वात् सूद्दीप्तत्वं द्वितीयतृतीयादिक्षणे तु स्तम्भप्रलययोरत्याधिक्येन स्वेदाश्रुरोमाञ्चानां लोपाद्भारतीप्रतिमायितत्वम्। तदैव विद्यार्थिनामागमनं तैः पूजनं च। अश्रुपुलकयोः सद्भावे प्रकृतत्वानुपपत्तेरिति च ज्ञेयम् ॥ ३७ ॥

इति सात्त्विकभावविवृतिः समाप्ता।

अथ व्यभिचारिविवृतिः। **परिकीर्तिता इति**। 'निर्वेदोऽथ विषादो दैन्यं ग्लानिश्रमौ च मदगर्वौ।' इत्यादिभिः पूर्वग्रन्थ एवोद्देशलक्षणोदाहरणैः सम्यगुक्ता अत्र तूज्ज्वले रसे ते औग्रा(ग्र्या)लस्ये द्वे विनेति। औग्रस्य विषयालम्बनसुखप्रतीपाचरणचण्डिमरूपत्वात् आलस्यस्य तु शक्तावपि क्रियानुन्मुखतारूपत्वात्ते न संभवतः; किं तु नायकयोः परस्परमेवेति ज्ञेयम्। परस्परसन्निविघातिषु जनेषु तु ते भवत एवेत्यग्रेतनग्रन्थे ज्ञेयम् ॥ १ ॥ **सख्यादिष्विति**। सखीप्रभृतिषु कृष्णवल्लभानां यः प्रेमा सः। आदिशब्दात् दूतीष्वपि परस्परायोगेषु, अन्येष्वपि च ॥ २ ॥ निर्वेद आत्मधिक्कारः। निर्वेदवती श्रीराधा श्रीकृष्णसमी-

---

॥ ३५ ॥ ३६ ॥ स्वेदैरित्याद्युक्तिरुदात्तालंकारमयी उद्दीप्ततामात्रतात्पर्या ॥ ३७ ॥
इति सात्त्विकाः ॥

अथ व्यभिचारिणः। औग्र्यस्य हिंसाकरचण्डतारूपत्वादालस्यस्य शक्तावपि क्रियानुन्मुखतारूपत्वात्। ते न संभवत इति किंतु मिथुनस्य परस्परमिति ज्ञेयम् ॥ १ ॥ संचारितां व्यभिचारिताम् ॥ २ ॥ उपचिन्वते आधिक्येन गृह्णन्ति।

धर्मः सोऽपि महान् मया न गणितः साध्वीभिरध्यासितो
धिग् धैर्यं तदुपेक्षितापि यदहं जीवामि पापीयसी ॥ ३ ॥

**विप्रयोगेण** यथोद्धवसंदेशे—

न क्षोदीयानपि सखि मम प्रेमगन्धो मुकुन्दे
क्रन्दन्तीं मां निजसुभगताख्यापनाय प्रतीहि ।
खेलद्वंशीवलयिनमनालोक्य तं वक्त्रबिम्बं
ध्वस्तालम्बा यदहमहह प्राणकीटं बिभर्मि ॥ ४ ॥

---

पादागतायाः सख्या मुखम्लान्याः स्वस्मिन् तस्योपेक्षामनुमिमाना प्राह—यस्य उत्सङ्ग एव सुखं तस्य सुखमूर्तित्वात् तदाशया । उत्सङ्गप्राप्त्यर्थमित्यर्थः । यद्यप्यत्र 'अधरसीधुनाप्याययस्व नः' इति 'कृणु कुचेषु नः कृन्धि हृच्छयं' इत्यादौ स्पष्टोक्त्या स्वसुखस्पृहा प्रतीयते; तदपि स्वसौन्दर्यवैदग्ध्यादिभिः श्रीकृष्णमहं विशेषतः सुखं प्रथयानीति सूक्ष्मो मानसो व्यापारः समर्थरतिमतीनां सर्वासामेव व्रजसुन्दरीणां सदैवास्त्येव किमुत तस्याः सर्वव्रजवामामुकुटमणिभूतायाः । किंतु स ताभिः स्ववाग्विषयीभूतः प्रायेण न क्रियते श्रीकृष्णस्त्वभिज्ञचूडामणिस्तं जानात्येवेति 'न पारयेऽहं निरवद्यसंयुजाम्' इत्यादिभिस्तद्वशीकारान्यथानुपपत्त्या एवं व्याख्यायते । अत एवोक्तं यदस्यां कृष्णसौख्यार्थमेव केवलमुद्यम इति । तथा—'आत्मारामस्य तस्येमा वयं वै गृहदासिकाः' इति 'तस्याहं गृहमार्जनी' इत्यादिभिः स्पष्टोक्त्या समञ्जसरतिमतीनां पुरसुन्दरीणां स्वसुखस्पृहाया अभावेऽपि स्वाङ्गस्पर्शादिभिः श्रीकृष्णो मां सुखयत्विति सूक्ष्मो मानसो व्यापारः केनाप्यंशेनास्त्येव, तं च श्रीकृष्णो जानात्येव 'यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः' इति श्रीशुकवाक्यान्यथानुपपत्त्येव व्याख्यायत इति । अध्यासितः अनुशीलितः ॥ ३ ॥ प्रोषितभर्तृका श्रीराधा ललितामाह—**न क्षोदीयानिति ।** निजसुभगताख्यापनाय तस्याहं सर्वतोऽप्याधिक्येन प्रेमपात्री पूर्वमासमिति लोके ज्ञापयामास । खेलन्ती रागस्वरतालमूर्च्छनादिवैचित्र्या विलसन्ती या वंशी तदुत्थनादमण्डली सैव वलयस्तद्युक्तम् । प्राण एव कीटस्तं निरन्तरं मां दशन्तमपि बिभर्मि

---

युक्त्येति व्यक्तीकरिष्यते ॥ पूर्वग्रन्थानुसारेण निर्वेदः स्वावमाननम् ॥ ३ ॥ ४ ॥

**ईर्ष्यया** यथा—

नात्मानमाक्षिप त्वं म्लायद्वदना गभीरगरिमाणम्।
सखि नान्तरं क्षितौ कश्चन्द्रावलितारयोर्वेत्ति ॥ ५ ॥

अथ **विषादः**—स इष्टानवाप्तितो यथा विदग्धमाधवे—

पीतं न वागमृतमद्य हरेरशङ्कं
न्यस्तं मयास्य वदने न दृगञ्चलं च।
रम्ये चिरादवसरे सखि लब्धमात्रे
हा दुर्विधिर्विरुरुधे जरतीच्छलेन ॥ ६ ॥

यथा वा श्रीदशमे—

अक्षण्वतां फलमिदं न परं विदामः
सख्यः पशूननुविवेशयतोर्वयस्यैः।
वक्त्रं व्रजेशसुतयोरनुवेणुजुष्टं
यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ॥ ७ ॥

---

धारयामि पालयामि च ॥ ४ ॥ श्रीराधायाः सौभाग्यसंपत्तिं सर्वत्र विख्यातां विलोक्य तामसहमाना धिङ्मामित्यात्मानमधिक्षिपन्तीं चन्द्रावलीं सान्त्वयन्ती पद्मा प्राह—**नेति**। गभीरो गरिमा अर्थात् श्रीकृष्णदत्तो यस्य तम्। ननु मत्तः सकाशात् अपि तस्याः ख्यातिरधिका श्रूयत इति चेत् सत्यं ख्यातिरियमलीकैव त्वत्प्रतिपक्षजनख्यापितेति प्रतीहि। यतः **सखीत्यादि**। त्वं चन्द्रावलिः राधा। तारैव राधाविशाखेत्यभिधानात् ॥ ५ ॥ **विषादः** पश्चात्तापः। पूर्वरागवती श्रीराधा जटिलाया अन्तिके विशाखां प्रति नीचैराह—**प्रीतिमिति**। जरती जटिलाभिधा श्वश्रूः ॥ ६ ॥ **श्रीराधायां** कादाचित्कं विषादमुदाहृत्य सर्वासु प्रतिदिनमपि पौर्वाह्णिकं विषादमुदाहर्तुमाह—**यथा वेति**। व्रजसुन्दर्यः परस्पर-

---

ताराशब्देनात्र श्रीराधा द्योतिता ॥ ५ ॥ विषादोऽनुतापः ॥ ६ ॥ वयस्यैः

प्रारब्धकार्यसिद्धिर्यथा श्रीगीतगोविन्दे—

गणयति गुणग्रामं भामं भ्रमादपि नेहते
वहति च परीतोषं दोषं विमुञ्चति दूरतः।
युवतिषु वलत्तृष्णे कृष्णे विहारिणि मां विना
पुनरपि मनो वामं कामं करोति करोमि किम् ॥ ८ ॥

---

माहुः। अक्षण्वतां चक्षुष्मतां जनानामिदमेव फलम्, इतः परमन्यत्फलं न विदामः। किंतु ते फलमित्यत आहुः। वयस्यैः सह पशूननु विवेशयतोर्वनाद्वनं प्रवेशयतोर्व्रजेशसुतयोर्मध्ये यदनुकूलेन वेणुना जुष्टं वक्त्रम्। श्रीकृष्णमुखमित्यर्थः। तत् यैर्निपीतं चक्षुषा आस्वादितम्। अनुरक्तेषु जनेषु कटाक्षमोक्षो यस्य तत्, अनुरक्तानां वा अपाङ्गप्रेरणं यस्मिन् तत्तेन कुलधर्मलज्जाभयादिभ्यो जलाञ्जलिं दत्त्वा वयमेतावन्तं कालमपि कथं तत्र नागच्छाम इति पश्चात्तापध्वनिः। हे सख्यः, मिथोऽनुजानीत संप्रत्यपि तत्रानुसृत्य तन्माधुर्यस्य कमप्यंशं लब्धुं यतेमहीत्यनुध्वनिः ॥ ७ ॥ कलहान्तरिता श्रीराधा ललितामाह—**गणयतीति**। मम मनः (कर्तृ) श्रीकृष्णे काममभिलाषं कुर्वदपि मनो मम निरुद्धमेवासीदिति भावः। करोमि किमित्यधुना तु मया निरोद्धुमशक्यमेवेति भावः। यतो वामं मत्प्रातिकूल्ये एव तिष्ठतीति भावः। प्रातिकूल्यस्थितिरेवाह—मां विना विहारिण्यपि सति श्रीकृष्णे गुणानां ग्रामं गणयति न चैकत्वाद्वचनगुणान्। भामं कोपमेकमपि भ्रमादपि न ईहते साक्षात्प्रत्यक्षेऽपि दोषाणां ग्रामे सत्यपि प्रत्युत परितोषं वहति। किं च यदि तेषु दोषेषु कोऽप्यनपलपनीयो महान् दोषोऽतिस्पष्टतया प्रत्यक्षीभवति तमपि दूरत एव मुञ्चति। यथा निकटमायातुं न शक्नोतीति भावः। तमेव दोषमाह—**युवतिषु वलत्तृष्ण इति**। तेन मानमहं श्रीकृष्णे कस्मादकरवमिति पश्चात्तापध्वनिः। त्वयापि मानशास्त्रमतः परं नाहमध्यापनीयेत्यनु-

---

सह पशूननु विवेशयतोर्वनाद्वनं प्रवेशयतोर्व्रजेशसुतयोः श्रीरामकृष्णयोर्विषययोरनु पश्चाद्वेणुजुष्टं यद्वक्त्रं तत् यैर्निपीतं तेषां तद्रूपं यत्फलं तदिदमेव अक्षण्वतां चक्षुष्मतां फलं परंतु न विदामो न विद्मः। तस्मात्तदपश्यन्तीनामस्माकं

**विपत्तितो** यथा ललितमाधवे—

निपीता न स्वैरं श्रुतिपुटिकया नर्मभणिति-
र्न दृष्टा निःशङ्कं सुमुखि मुखपङ्केरुहरुचः।
हरेर्वक्षःपीठं न किल घनमालिङ्गितमभू-
दिति ध्यायं ध्यायं स्फुटति लुठदन्तर्मम मनः॥ ९॥

**अपराधा**द्यथा—

हरेर्वचसि सूनृते न निहिता श्रुतिर्वामया
तथा दृगपि नार्पिता प्रणतिभाजि तस्मिन्पुरः।
हितोक्तिरपि धिक्कृता प्रियसखी मुहुस्तेन मे
ज्वलत्यहह मुर्मुरज्वलनजालरुद्धं मनः॥ १०॥

अथ **दैन्यम्**—**तद्दुःखेन** यथा बिल्वमङ्गले—

अयि मुरलि मुकुन्दस्मेरवक्त्रारविन्द-
श्वसनरसरसज्ञे त्वां नमस्कृत्य याचे।
मधुरमधरबिम्बं प्राप्तवत्यां भवत्यां
कथय रहसि कर्णे मद्दशां नन्दसूनोः॥ ११॥

---

ध्वनिः॥ ८॥ प्रोषितभर्तृका श्रीर्विलपति—**निपीतेति**। अत्रानुरागेण स्थायिना नर्मभणित्यादीनि मुहुरनुभूतान्येव कियन्त इति तथोक्तिः। अन्तर्मान्तःकरणे लुठत्सत् मनः स्फुटति॥ ९॥ कलहान्तरिता श्रीराधा विलपति—**हरेरिति**। सूनृते सत्यप्रिये, वामया क्रूरया। हितोक्तिर्हितोपदेशवाक्यम्। मुर्मुरज्वलनस्तुषाग्निः॥ १०॥ दैन्यमात्मनिकृष्टतामननम्॥ बिल्वमङ्गलाभिधो भक्तो व्रजबालाभावभावितान्तःकरणं प्रार्थयते—**अयीति**। श्वसनरसः फूत्कारानिलमाधुर्यं तस्य रसज्ञे आस्वादविदुषि, मम दशां तत्प्राप्त्युत्कण्ठानलदह्यमान-

---

व्यर्थमेव चक्षुष्मत्त्वमिति भावः॥ ७॥ ८॥ ९॥ मुर्मुरज्वलनस्तुषाग्निः। दावाग्न्यादिवदेषां शब्दानां पृथक् पृथगपि प्रयोगः॥ १०॥ दैन्यं चात्मनिकृष्टतामननेन चाटुः। पूर्वेण रसशब्देन माधुर्यमुच्यते द्वितीयेन त्वास्वादः

यथा वा श्रीदशमे—

तन्नः प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं
प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ।
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकाम-
तप्तात्मनां पुरुषभूषण देहि दास्यम् ॥ १२ ॥

**त्रासेन यथा—**

अपि करधूतिभिर्भयापनुन्नो मुखमयमञ्चति चञ्चलो द्विरेफः ।
अघदमन मयि प्रसीद वन्दे कुरु करुणामवरुन्धि दुष्टमेनम् ॥१३॥

**अपराधेन** यथा—

आलि तथ्यमपराद्धमेव ते दुष्टमानफणिदष्टया मया ।
पिच्छमौलिरधुनानुनीयतां मामकीनमनवेक्ष्य दूषणम् ॥ १४ ॥

**अथ ग्लानिः**—सा श्रमेण यथा—

व्यात्युक्षीमघमथनेन पङ्कजाक्षी
कुर्वाणा किमपि सखीषु सस्मितासु ।

---

त्वम् ॥ ११ ॥ साधकभक्तस्य दैन्यमुदाहृत्य सिद्धानामपि तमुदाहर्तुमाह—**यथावेति** । रासारम्भे श्रीकृष्णस्यौदासीन्यव्यञ्जकवाक्येन व्याकुलाः सचाटु गोप्य आहुः—**तन्न इति** ॥ १२ ॥ वनविहारे श्रीराधा कृष्णमाह—**अपीति** । करधूतिभिः करचालनैः अपनुन्नः निरस्तोऽपि ॥ १३ ॥ श्रीकृष्णप्रणामसमये सखि राधे, त्वत्प्राणकोटेरधिकस्य कान्तस्यास्य सकृदप्यपराधं क्षमस्वेत्युक्तवत्यहं दुर्बुद्धे विशाखे, मदन्तिकादितो दूरीभवेत्याक्षिप्य तदानीं त्वयाहं दूरीकृता अभूवं संप्रति स्वयमेव मन्निकटं कथमायासीति वदन्तीं विशाखां श्रीराधा प्राह—**आलीति** । ते तुभ्यम् । **मानफणीति** । न हि सर्पदष्टो जनस्तद्विषोन्मादितः प्रलपन् बन्धुजनेनोपलोभ्यत इति भावः । ननु श्रीकृष्णस्त्वयि विमुखो वर्तत इत्यत आह—**पिच्छेति** ॥ १४ ॥ ग्लानिर्निर्बलता ॥ वृन्दा पौर्णमासीमाह—व्यात्युक्षीं परस्परजलसेकम् । **सस्मितास्विति** । सखीराक्षिप्य स्वयमेव द्वन्द्व-

---

॥ ११ ॥ १२ ॥ १३ ॥ ते तव संबन्धे त्वयीत्यर्थः । अपराद्धमिति । तव वचनानवधानेनेति गम्यते । तत्र हेतुर्दुष्टेति ॥ १४ ॥ ग्लानिर्निर्बलता । व्यात्युक्षी-

क्षामाङ्गी मणिवलयं स्खलत्करान्ता-
त्कालिन्दीपयसि रुरोध नाद्य राधा ॥ १५ ॥

**आधिना** यथा हंसदूते—

प्रतीकारारम्भश्लथमतिभिरुद्यत्परिणते-
र्विमुक्ताया व्यक्तस्मरकदनभाजः परिजनैः ।
अमुञ्चन्ती सङ्गं कुवलयदृशः केवलमसौ
बलादद्य प्राणानवति भवदाशासहचरी ॥ १६ ॥

---

युद्धे प्रवृत्ता, अथ च तदपारयन्तीमहंकारमात्रावशिष्टां तां विलोक्येत्यर्थः । करान्तात् हस्ताग्रतः स्खलत् पतदपि वलयं न रुरोध रोद्धुं नाशकदित्यर्थः । तत्र हेतुः **क्षामाङ्गीति** ॥ १५ ॥ ललिता हंसं प्रति वदन्ती श्रीकृष्णं संदिशति—**प्रतीति** । कुवलयदृशः श्रीराधायाः प्राणान् भवदाशैव सहचरी केवलं बलादेव अवति देहान्निःसर्तुं न ददातीति प्राणेभ्योऽपि तस्याः प्राबल्यमुक्तम् । कीदृश्याः । व्यक्तः सर्वगोचरीभूतः स्मरस्त्वद्विषयकः प्रेमा । 'प्रेमैव गोपरामाणां काम इत्यगमत्प्रथा ॥' इत्युक्तेः । तेनैव यत्कदनं परिमातुं शक्यमिति पुनर्विशिनष्टि । उद्यन्ती परिणतिरन्तिमावस्था यस्यास्तादृश्याः । अत एव परिजनैरस्मद्विधैरियं न जीविष्यतीति निश्चयेन तत्कदनस्य प्रतीकारारम्भे श्लथमतिभिः सद्भिर्विमुक्तायाः । भूमिशय्यायां शयिताया इत्यर्थः । किं च आशैव असाध्येऽपि गदे स्वसामर्थ्येन चिकित्सितुं प्रवृत्तेत्याह—**अमुञ्चन्ती सङ्गमिति** । तेन त्वत्प्रेयसीं सा आशा सहचर्येव जीवयन्ती संप्रति वर्तते साद्यावधिदिवसात्

---

मन्योन्यसेचनम् ॥ १५ ॥ कुवलयदृशः श्रीराधायाः प्राणान् केवलमसौ भवदाशासहचरी बलादद्यावति । कीदृश्याः । व्यक्तस्मरकदनभाजः । स्मरोऽत्र प्रेमविशेषस्तत्स्मरणम् । पुनः कीदृश्याः । परिजनैर्विमुक्तायाः । कीदृशैस्तैः । प्रतीकारारम्भश्लथमतिभिः । कुतस्तादृशता तेषामित्याशङ्क्य तादृगवस्थाविशेषमेव तत्र हेतुमाह—उद्यती उदयमाना परिणतिरन्तिमावस्था यस्यास्तादृश्याः । अहो आशासहचरी कीदृशी । तत्राह—**सङ्गममुञ्चन्तीति** । तदेवं ललिता स्वालीर्निन्दित्वा त्वामाशामेव स्तुवती तस्यास्तवाशायाः पालनं न भवता त्याज्यमिति

**रतेन** यथा श्रीगीतगोविन्दे—

मारङ्के रतिकेलिसंकुलरणारम्भे तया साहस-
प्रायं कान्तजयाय किंचिदुपरि प्रारम्भि यत्संभ्रमात् ।
निस्पन्दा जघनस्थली शिथिलिता दोर्वल्लिरुत्कम्पितं
वक्षो मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिध्यति ॥१७॥

अथ **श्रमः**—सोऽध्वनो यथा पद्यावल्याम्—

द्वित्रैः केलिसरोरुहं त्रिचतुरैर्धम्मिल्लमल्लीस्रजं
कण्ठान्मौक्तिकमालिका तदनु च त्यक्त्वा पदैः पञ्चषैः ।
कृष्णप्रेमविघूर्णितान्तरतया दूराभिसारातुरा
तन्वङ्गी निरुपायमध्वनि परं श्रोणीभरं निन्दति ॥ १८ ॥

---

परदिने न स्थास्यतीसि भवता न ज्ञायत एव इति एतन्मध्ये शीघ्रमागन्तव्यमिति ध्वनिः ॥ १६ ॥ सख्यः परस्परं श्रीराधाकृष्णयो रहस्यलीलामास्वादयन्ति— मारः कन्दर्पः श्लेषेण प्रहारः । माराङ्कश्चिह्नं यत्र तस्मिन्, रतिकेलिभिः संकुलो व्याप्तो यो रणस्तस्यारम्भे । तया श्रीराधया । यद्यस्मात् किंचिदुपरीति रहस्यम् ॥ १७ ॥ सख्यः परस्परं श्रीराधाभिसारलीलामास्वादयन्ति—**द्वित्रैरिति** । द्वौ वा त्रयो वा द्वित्रास्तैः पदैः पादविन्यासौ ॥ एवं तदन्विति सर्वत्र योज्यम् । अतो केलिकलादयो भावाः सर्व एव त्यक्तास्तदप्यहं कथं शीघ्रं चलितुं न शक्नोमीति विमृशन्ती स्वश्रोणीं दृष्ट्वा अहो अस्या एव महाभारेण इति तं निरुपायं दुस्त्यजं निन्दति—धिक् त्वां त्वन्निर्मातारं विधातारं च धिगिति । यदि श्रोण्या भारो मे नाभविष्यत्तदा शीघ्रमभ्यसरिष्यमिति मे नास्ति दोष इति भावः ॥१८॥

---

व्यञ्जयति । अत्र च बलादद्यावतीति । बलं तु तस्याः श्वः स्याता न वेति वितर्क्य तर्पयन्तमपि विलम्बं मा कार्षीरिति भावः ॥ १६ ॥ १७ ॥ श्रमः क्लेशः । **द्वित्रैरिति** । कस्याश्चिद्दूत्याः श्रीकृष्णं प्रति वचनम् । अत्र कृष्णेति संबोधनमेव । निरुपायं प्रतीकारान्निष्क्रान्तम् । दूराभिसारे आतुरा सामर्थ्य-

नृत्याद्यथा—

शिथिलगतिविलासास्तत्र हल्लीशरङ्गे
हरिभुजपरिघाग्रन्यस्तहस्तारविन्दाः ।
श्रमलुलितललाटश्लिष्टलीलालकान्ताः
प्रतिपदमनवद्याः सिष्विदुर्वेदिमध्याः ॥ १९ ॥

रताद्यथा—

अहह भुजयोर्द्वन्द्वं मन्दं बभूव विशाखिके
समजनि घनस्वेदं चेदं युगं तव गण्डयोः ।
धृतमधुरिमस्फूर्तिर्मूर्तिस्तथापि वरानने
प्रमदसुधयाक्रान्तं स्वान्तं मम प्रणयत्यसौ ॥ २० ॥

अथ मदः—[स]मधुपानजो यथा—

या ह्रिया हरिपुरो मुखमुद्रां भङ्क्तुमध्यवससौ न कदापि ।
सा पपाठ चटुलं मधु पीत्वा शारिकेव पशुपालकिशोरी ॥२१॥

---

वृन्दा पौर्णमासीमाह—**शिथिलेति** । हल्लीशं रासनृत्यम् । श्रमेण लुलिताः स्रस्ताः ललाटे श्लिष्टाः प्रस्वेदबिन्दुश्लिष्टा लीलालकानां केलिसूचकचूर्णकुन्तलानामन्ता अग्रभागा यासां ताः । वेद्या मध्यमिव क्षीणं मध्यं यासां ताः ॥१९ ॥ श्रीकृष्णः संभुक्तां विशाखामाह—**अहहेति** । मन्दमपटु । 'मूढाल्पापटुनिर्भाग्या मन्दा' इति नानार्थवर्गात् । मम स्वान्तं प्रमदसुधया आक्रान्तं प्रणयति करोति । अत्रानुवादविधेययोः पौर्वापर्याभावोऽनुप्रासानुरोधात् सोढव्यः ॥ २० ॥ मदो मधुपानोत्था मत्तता विवेकशून्या ॥ कुन्दवल्ली नान्दीमुखीमाह—**येति** । नाध्यवससौ नेष्टवती । अनङ्गविक्रियाभरजो मदस्तु प्रायः स्वाभियोग एव

---

रहिता ॥ १८ ॥ १९ ॥ मन्दमपटुता । प्रणयति करोति ॥ २० ॥ मदो विवेक-

अथ **गर्वः**—स **सौभाग्येन** यथा—

मुञ्चन्मित्रकदम्बसंगमभजन्नप्युत्सुकाः प्रेयसी-
रेष द्वारि हरिस्त्वदाननतटीन्यस्तेक्षणस्तिष्ठति ।
यूथीभिर्मकराकृति स्मितमुखी त्वं कुर्वती कुण्डलं
गण्डोद्यत्पुलका दृशोऽपि न किल क्षीबे क्षिपस्यञ्चलम् ॥ २२ ॥

**रूपेण** यथा—

चन्द्रावलीवदनचन्द्रमरीचिपुञ्जं
कः स्तोतुमप्यतिपटुः क्षमते क्षमायाम् ।
येनाद्य पिच्छमुकुटोऽपि निकेतवाटी-
पर्यन्तकाननकुटीरचरः कृतोऽयम् ॥ २३ ॥

यथा वा विदग्धमाधवे—

सहचरि वृषभानुजया प्रादुर्भावे वरत्विषोपगते ।
चन्द्रावलीशतान्यपि भवन्ति निर्धूतकान्तीनि ॥ २४ ॥

---

पर्यवस्यतीत्यत्र नोद्दिष्टः ॥ २१ ॥ गर्वोऽन्यहेलनम् ॥ विशाखा कुञ्जमन्दिरस्थां श्रीराधां प्रत्याह—**मुञ्चन्निति** । अभजन् नैवेच्छन्नित्यर्थः । मकराकृतीति कुण्डलमपि श्रीकृष्णार्थमेव करोषि तदपि दृशोऽञ्चलं न क्षिपसि । स्मितमुखीति हर्षोत्थं स्मितमपि रोद्धुं न शक्नोषि तदपीति पूर्ववत् । **उत्पुलकेति** । पुलका एव तवौत्सुक्यं कथयन्ति तदपीति पूर्ववत् । विव्वोकोऽयम् ॥ २२ ॥ कदाचित्संसदि चन्द्रावलीसौन्दर्यकृतकटाक्षायां ललितायां पद्मा ससंरम्भमाह—**चन्द्रावलीति** । येन मरीचिपुञ्जेन ॥ २३ ॥ श्रीराधिकायामुदाहर्तुमाह—**यथा वेति** । तां पद्मोक्तिमाकर्ण्य ललिता साटोपमाह—**सहेति** । वृषभानुजया ज्येष्ठमासीयसूर्योत्थया वरत्विषा(कन्त्या) प्रादुर्भावे उपगते प्राप्ते सति चन्द्रश्रेणीशतान्यपीत्यादि, पक्षे वृषभानुजया श्रीराधया ।

---

दृशोऽञ्चलः नाध्यवससौ नाध्यवसितवती । नेष्टवतीत्यर्थः ॥ २१ ॥ गर्वोऽन्यहेलनम्

**गुणेन** यथा—

रमयन्तु तावदमलैर्ध्वनिभिर्गोपीकपोतिकाः कृष्णम्।
इह ललिता कलकण्ठी कलं न यावत्प्रपञ्चयति ॥ २५ ॥

**सर्वोत्तमाश्रयेण** यथा श्रीविष्णुपुराणे—

जानामि ते पतिं शक्रं जानामि त्रिदशेश्वरम्।
पारिजातं तथाप्येनं मानुषी हारयामि ते ॥ २६ ॥

**इष्टलाभेन** यथा—

नम्रा न भवतु वंशी मुकुन्दवक्त्रेन्दुमाधुरीरसिका।
त्वं दुर्लभतद्गन्धा लगुडि वृथा स्तब्धतां वहसि ॥ २७ ॥

यथा वा श्रीदशमे—

उन्नीय वक्त्रमुरुकुन्तलकुण्डलत्विड्
गण्डस्थलं शिशिरहासकटाक्षमोक्षैः।
राज्ञो निरीक्ष्य परितः शनकैर्मुरारे-
रंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥ २८ ॥

---

कीदृश्या वरलिषा ॥ २४ ॥ विपक्षसुन्दरीसंसदि गानप्रस्तावे ललितायाः सखी प्राह—ललितैव कलकण्ठी कोकिला ॥ २५ ॥ सत्यभामा शचीं संदिशति—**जानामीति** ॥ २६ ॥ चोरितां श्रीकृष्णलगुडीं रहसि स्वसखीसदसि श्रीराधा साक्षेपमाह—**नम्रेति**। अत्र वंशा गर्वं व्यञ्जितं तुष्टाव, लगुड्या निनिन्द ॥ २७ ॥ पुरसुन्दरीष्वपि व्यभिचारिभावा एवं सर्व एवोदाहर्तव्या इति ज्ञापयितुमाह—**यथा वेति**। लक्ष्मणा कुरुक्षेत्रे युवतिसंसदि स्वीयस्वयंवरणचरित्रं द्रौपदीमाह—**उन्नीयेति**। परितश्चतुर्दिक्षु स्थितान् राज्ञो निरीक्ष्येति मद्वरणीयः श्रुतचररूपगुणः श्रीकृष्णः क खलूपविष्ट इति तमन्वेष्टुमिति भावः। ततश्चोरु-

---

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ललितैव कलकण्ठी कोकिला ॥ २६ ॥ जानामीति श्रीसत्यभामावाक्यम्। नम्रेत्यत्रोत्प्रेक्षितमात्रोऽपि गर्वः श्रोतॄणां चेतसि सत्यवद्भातीत्युदाहृतम् ॥ २७ ॥ **उन्नीयेति**। लक्ष्मणायाः स्वयंवरणायागताया-

अथ शङ्का सा चौर्येण यथा—

हरन्ती निद्राणे मधुभिदि[1] करात्केलिमुरलीं
लतोत्सङ्गे लीना घनतमसि राधा चकितधीः ।
निशि ध्वान्ते शान्ते शरदमलचन्द्रद्युतिमुषा-
मसौ निर्मातारं स्ववदनरुचां निन्दति विधिम् ॥ २९ ॥

---

कुन्तलेत्यादिलक्षणं वक्रमुन्नीय शिशिरहासकटाक्षमोक्षैः सह मुरारेरंसे स्कन्धे 'मालां स्वयंवरणद्योतिनीं पुष्पस्रजं निदधे निहितवत्यस्मि इति स्वगर्वो व्यञ्जितः ॥ २८ ॥ शङ्का स्वानिष्टोत्प्रेक्षणम् । श्रीराधिकामुरलीचौर्यलीलां सख्यः परस्परमास्वादयन्ति—**हरन्तीति** । निद्राणे लब्धनिद्रे सति केलिमुरलीं हरन्ती हर्तुमिच्छन्तीत्यर्थः । ततश्च ध्वान्ते शान्ते विरते सति । चकितधीः अहो कथमकस्मादन्धकारपुञ्जो नष्ट इति स्वप्रकाशभयात् त्रस्तचित्ता । ततश्च विमृश्य ध्वान्तध्वंसकारणं स्वमुखकिरणजालमेव ज्ञात्वा स्वमुखरुचां निर्मातारं विधिं विधातारमेव निन्दति—यदि विधाता मन्मुखकान्तीरीदृशीर्नास्रक्ष्यत् तदाहमधुनैव मुरलीमचोरयिष्यमिति मदभिलषिते स एव विघ्नकरोऽभूदिति धिक् तं विधातारमिति

---

श्वरितं स्वयमेव तथा कथितम् । उरुकुन्तलेत्यादिलक्षणं वक्रमुन्नीय स्वयंवरणीयस्य मुरारेर्दर्शनस्यान्यथानुपपत्तेरुन्नमय्य मुरारेरंसे स्कन्धे स्वां स्वयंवरणाय स्वेन रचितां मालां निदधे निहितवत्यस्मि । किं कृत्वा । शनकैरवज्ञया मन्दं मन्दं राज्ञो निरीक्ष्य । निरीक्षणपूर्वकं परित्यज्येत्यर्थः । कैरुपलक्षितां मालां निहितवत्यस्मि तत्राह—शिशिरः शिशिरकरांशुरिव हर्षस्वाभाविको हासः स्मितं येषु तादृशैः कटाक्षमोक्षैरपाङ्गदृष्टिविसृष्टिभिः । तत्र कारणमाह—अनुरक्तहृदयेति ॥ २८ ॥ **अथ शङ्केति** । तल्लक्षणं चोक्तम्—स्वानिष्टोत्प्रेक्षणं शङ्केति । भयं तस्याः कार्यम् । तच्च लक्षितम्—'भयं चित्तातिचाञ्चल्यं मत्तचोरेक्षणादिभिः ।' ॥ हरन्तीत्यादौ 'लतोत्सङ्गे लीना वृषरविसुता यत्र(?) तमसि घने तस्मिञ्शान्ते निजवदनकान्तेर्विततिभिः । विधातारं तासां जित-

---

1. 'बकभिदि' इति ख. पुस्तके.

**अपराधा**द्यथा ललितमाधवे—

उत्ताम्यन्ती विरमति तमस्तोमसंपत्प्रपञ्चे
न्यञ्चन्मूर्धा सरभसमसौ स्रस्तवेणीवृतांसा।
मन्दस्पन्दं दिशि दिशि दृशोर्द्वन्द्वमल्पं क्षिपन्ती
कुञ्जाद्गोष्ठं विशति चकिता वक्रमावृत्य पाली॥ ३०॥

**शङ्का तु प्रवरस्त्रीणां भीरुत्वाद्भयकृद्भवेत्॥ ३१॥**

**परक्रौर्या**द्यथा विदग्धमाधवे—

व्यक्तिं गते मम रहस्यविनोदवृत्ते
रुष्टो लघिष्ठहृदयस्तरसाभिमन्युः।
राधां निरुध्य सदने विनिगूहते वा
हा हन्त लम्भयति वा यदुराजधानीम्॥ ३२॥

---

भावः॥ २९॥ वृन्दाह—**उत्ताम्यन्तीति**। हन्त प्रातर्जातं कथमद्य गोष्ठं प्रविशामीति विह्वलेत्यर्थः। **न्यञ्चन्मूर्धेति**। दूरस्थः कोऽपि मां पश्यन्नपि न परिचिनोत्वित्यभिप्रायेण। सरभसं सत्वरम्। **मन्दस्पन्दमिति**। रजन्युज्जागरेण। **वक्रमावृत्येति**। समीपागतोऽपि जनो मां न परिचिनोत्विति बुद्ध्या॥ ३०॥ अत्र शङ्कायाः कारणमपराधः स च स्वकुलधर्मोल्लङ्घनरूपः, तथा भयानकरसस्य स्थायी यद्भयं तस्यापि कारणमपराधः। यदुक्तम्—'भयं चित्तातिचाञ्चल्यं मन्तुघोरेक्षणादिभिः।' इति। तस्माद्भयस्य सान्द्रत्वे स्थायित्वमसान्द्रत्वे शङ्काभिधानतया व्यभिचारित्वमिति भेदः कल्प्यः। किं चात्र **शङ्का त्विति**। प्रवरस्त्रीणां भीरुत्वाद्धेतोः शङ्का तु भयकृत् भयस्य कर्त्री स्यात्। प्रथममसान्द्रं स्तोकमेव भयं शङ्काख्यं स्यात्। तदेव लक्षणमात्रत एव सान्द्रं बहुलं सत् भयानकरसस्य स्थायिभावो भयं स्यादित्यर्थः॥ ३१॥ श्रीराधावेषधारिणं सुबलं स्ववधूं ज्ञात्वा जटिलया श्रीकृष्णसमीपात् कोपेन गोपीनां सभां प्रति नीतमालोक्य स श्रीकृष्णोऽपि तत्संदर्भमजानन् सानुतापमाह—**व्यक्तिमिति**

---

विधुरुचां निन्दति विधिम्' इति चान्तिमचरणत्रयमस्ति॥ २९॥ चकिता भीता॥ ३०॥ तर्हि कथं शङ्काया एवोदाहरणमत्र कृतं तत्राह—**शङ्का त्विति**। शङ्का तु भयं न व्यभिचरत्येव प्रवरस्त्रीणां तु विशेषतः। तत् कथं तद्विनोदाह-

अथ **त्रासः**—स **तडिता** यथा—

स्फूर्जिते नभसि भीरुरुद्यतां विद्युतां द्युतिमवेक्ष्य कम्पिता ।
सा हरेरुरसि चञ्चलेक्षणा चञ्चलेव जलदे न्यलीयत ॥ ३३ ॥

**घोरसत्त्वेन** यथा विदग्धमाधवे—

कर्णोत्तंसितरक्तपङ्कजजुषो भृङ्गीपतेर्झंक्रिया
भ्रान्तेनाद्य दृगञ्चलेन दधती भृङ्गावलीविभ्रमम् ।
त्रासान्दोलितदोर्लतान्तविचलच्चूडा झणत्कारिणी
राधे व्याकुलतां गतापि भवती मोदं ममाध्यस्यति ॥३४॥

**उग्रनिस्वनेन** यथा—

त्वमसि मम सखेति किंवदन्ती मुदिर चिराद्भवता व्यधायि तथ्या ।
मृदुरसि रसितैर्निरस्यमानं यदुदितवेपथुरर्पिताद्य राधा ॥ ३५ ॥

---

॥ ३२ ॥ त्रासोऽकस्माद्विद्युदादिभिर्मनसः कम्पः पूर्वापरविचारोत्था शङ्का सैवातिसान्द्रा बहुला भयमिति त्रासशङ्काभयानां भेदः ॥ रूपमञ्जरी कुन्दवल्लीं प्रत्याह—**स्फूर्जिते इति** । नभसि आकाशे स्फूर्जिते मेघगर्जनेन शब्दिते सति उद्यतामुद्गतानाम् । सा राधा चञ्चलेव विद्युदिव ॥ ३३ ॥ श्रीकृष्ण आह—**कर्णेति** । दृगञ्चलेनेति जात्या एकवचनम् । मुहुर्मुहुस्तिर्यग्गतैर्दृगञ्चलैरित्यर्थः । त्रासेनान्दोलितयोरितस्ततो विक्षिप्तयोर्दोर्लतयोरन्तर्वर्तिनीनां विचलन्तीनां चूडानां वलयानां झणत्कारवती । 'चूडा शिखायां वलभौ चूडा बाहुविभूषणे ।' इति विश्वः । बाहुशब्देन करपर्यन्तोऽप्यसावुच्यते । आजानुबाह्वादिशब्दप्रयोगात् अध्यस्यत्यर्पयति । अत्र तव कष्टं मम मोद इत्यस्य विवक्षितत्वात् संबन्धस्य प्राधान्यात् षष्ठी ॥३४॥ श्रीकृष्ण आह—**त्वमिति** । किंवदन्ती सख्युर्व्यधा-

---

तव्यमिति भावः ॥ ३१ ॥ ३२ ॥ **अथ त्रास इति** । तल्लक्षणम्—'त्रासः क्षोभो हृदि तडिद्घोरसत्त्वोग्रनिस्वनैः ।' इति । 'गात्रोत्कम्पी मनःकम्पः सहसा त्रास उच्यते । पूर्वापरविचारोत्थं भयं त्रासाद्विभिद्यते ॥' इति ॥ ३३ ॥ **कर्णोत्तंसितेति** । श्रीकृष्णवचनम् । चूडाः कङ्कणाः अध्यस्यति अर्पयति ममेति सप्तम्यर्थे संबन्धसामान्यास्तित्वविवक्षया षष्ठी ॥ ३४ ॥ **त्वमसीति** । श्रीकृष्ण-

अथावेगः—स प्रियदर्शनजो यथा ललितमाधवे—

सहचरि निरातङ्कः कोऽयं युवा मुदिरद्युति-
व्रजभुवि कुतः प्राप्तो माद्यन्मतङ्गजविभ्रमः।
अहह चटुलैरुत्सर्पद्भिर्दृगञ्चलतस्करै-
र्मम धृतिधनं चेतःकोषाद्विलुण्ठयतीह यः॥ ३६॥

यथा वा तत्रैव—

उपतरु ललितां तां प्रत्यभिज्ञाय सद्यः
प्रकृतिमधुररूपां प्रेक्ष्य राधाकृतिं च।
मणिमपि परिचिन्वन् शङ्खचूडावतंसं
मुहुरहमुदघूर्णं भूरिणा संभ्रमेण॥ ३७॥

---

त्स्ववपुषाम्बुद आतपत्रम्' इत्यादिरूपा। 'किंवदन्ती जनश्रुतिः' इत्यमरः। मुदिर हे मेघ, तथ्या सत्या रसितैर्गर्जनशब्दैः॥ ३५॥ 'आवेगश्चित्तविभ्रमः' इतिकर्तव्यतामूढ इति यावत्॥ अनुरागाख्यस्थायिभाववती श्रीराधा वितर्कयति—**सहचरीति**॥ ३६॥ अत्रेतिकर्तव्यतामूढत्वं न स्पष्टमित्यपरितुष्यन्नाह—**यथा वेति**। अत्र ललितमाधवीयकथायां माथुरविरहोन्मादेन खेलातीर्थमवगाहमाना सविशाखा च श्रीराधा सूर्यमण्डलं प्राप्ता स्वकण्ठात् शङ्खचूडाख्यमणिं सूर्यायोपजहार। ललिताविश्लेषज्वरोन्मत्ता गोवर्धने भृगुपतनं कुर्वती जाम्बवता स्वहस्तेन गृहीत्वा स्वपुरमानीता, स्वकन्यात्वेन ख्यापिता जाम्बवती बभूव। सा चेन्द्रनीलमणिजाम्बूनदाभ्यां श्रीकृष्णराधयोः प्रतिमे निर्माय तद्दर्शनादिनैव कालं यापयामास। सूर्यश्च श्रीराधां सत्यभामाख्यया मणिं च स्यमन्तकाभिधानतया ख्यापयन् स्वभक्ताय सत्राजिते ददौ। सत्राजिता च दत्तकलङ्कः श्रीकृष्णो जाम्बवतः पुरीं जगाम। जाम्बवांश्च युद्धान्ते स्वप्रभुं परि-

---

वाक्यम्, किंवदन्ती च 'सख्युर्व्यधास्त्ववपुषाम्बुद आतपत्रम्' इत्यादिरूपा॥ ३५॥ आवेगश्चित्तस्य संभ्रमः। प्रतिक्षणं नवनवायमानं तं दृष्ट्वा श्रीराधावचनम्॥ ३६॥ **उपतरु ललितामिति**। अत्र कथा पूर्ववल्ललितमाधवा-

**प्रियश्रवणजो** यथा ललितमाधवे—

धन्ये कज्जलमुक्तवामनयना पद्मे पदोढाङ्गदा
सारङ्गिध्वनदेकनूपुरधरा पालिस्खलन्मेखला ।
गण्डोद्यत्तिलका लवङ्गि कमले नेत्रार्पितालक्तका
मा धावोत्तरलं त्वमत्र मुरली दूरे कलं कूजति ॥ ३८ ॥

**अप्रियदर्शनजो** यथा तत्रैव—

क्षणं विक्रोशन्ती विलुठति शताङ्गस्य पुरतः
क्षणं बाष्पग्रस्तां किरति किल दृष्टिं हरिमुखे ।
क्षणं रामस्याग्रे पतति दशनोत्तम्भिततृणा
न राधे यं कं वा क्षिपति करुणाम्भोधिकुहरे ॥ ३९ ॥

**अप्रियश्रवणजो** यथा—

व्रजनरपतेरेष क्षत्ता करोति गिरा प्रगे
नगरगतये घोरं घोषे घनां सखि घोषणाम् ।
श्रवणपदवीमारोहन्त्या यया कुलिशोग्रया
रचितमचिरादाभीरीणां कुलं मुहुराकुलम् ॥ ४० ॥

---

चिन्त्य, तं रत्नपर्यङ्के उपवेश्य, मण्यानयनार्थं स्वान्तःपुरमविशत् । अथ क्षणतः कयाचिज्जरत्या प्रोक्तसर्ववृत्तान्ता ललिता जरतीहस्ते श्रीराधाप्रतिमां स्यमन्तकमणिकण्ठीं समर्प्य श्रीकृष्णं द्रष्टुं तरुमन्तरा तस्थौ । ततस्तां ललितां दृष्टवतः स्वस्य या दशा अजनि तामेव द्वारकामागत्य श्रीकृष्णो मधुमङ्गलं प्रत्याह—उपतरु तरोः समीपे प्रत्यभिज्ञाय—सैवेयं ललितेति परिचित्य । राधाकृतिं श्रीराधाप्रतिमाम् ॥ ३७ ॥ कुन्दवल्ली प्राह—**मा धावेति** प्रत्येकमन्वितम् ॥ ३८ ॥ मथुरास्थाने रथारूढं श्रीकृष्णमालोकयन्त्याः श्रीराधायाश्चेष्टितं वृन्दा वर्णयति—शताङ्गस्य रथस्य ॥ ३९ ॥ कुन्दवल्ली नान्दीमुखीं प्रत्याह—व्रजनरपतेर्गिरा एष

---

ज्ञेया ॥ ३७ ॥ मा धावेति प्रत्येकमन्वितम् ॥ ३८ ॥ ३९ ॥ ४० ॥

एवमन्येऽप्यूह्याः।

अथोन्मादः—स प्रौढानन्दाद्यथा—

प्रसीद मदिराक्षि मां सखि मिलन्तमालिङ्गितुं
निरुन्धि मुदिरद्युतिं नवयुवानमेनं पुरः।
इति भ्रमरिकामपि प्रियसखीं भ्रमाद्याचते
समीक्ष्य हरिमुन्मदप्रमदविक्लवा बल्लवी॥ ४१॥

विरहाद्यथा—

काप्यान्दोलितकुन्तला विलुठति काप्यङ्गुलीभङ्गत-
स्त्वङ्गद्भ्रूर्दशनैर्विदश्य दशनान् कंसं शपत्युद्धुरा।
कुत्राप्यद्य तमालमुत्तरलधीरालोक्य धावत्यलं
राधा त्वद्विरहज्वरेण पृथुना दूना यदूनां पते॥ ४२॥

अथापस्मारः—यथा—

अङ्गक्षेपविधायिभिर्निबिडितोत्तुङ्गप्रलापैरलं
गाढोद्वर्तिततारलोचनपुटैः फेनच्छटोद्गारिभिः।

---

क्षत्ता व्रजनगरद्वारपालः प्रगे श्वः प्रातःकाले नगरगतये मथुरां गन्तुं घोरं यथा घोषणया॥ ४०॥ उन्मादश्चित्तविभ्रमः। वृन्दा प्राह—भ्रमरिकां भृङ्गीम् ॥ ४१॥ उद्धवो व्रजादागत्य श्रीकृष्णाय वर्णयति—अङ्गुलीनां भङ्गतः स्फोटनात्। त्वङ्गद्भ्रूश्चलद्भ्रूयुगला। 'त्वगि चलने' धातुः। **कंसं शपतीति**। रे कंस, परलोकगतस्यापि तवाशा तुषायमाणा भवतु यत्त्वयाहमेतावद्दुःखं प्रापितेति। दूना उपतप्ता सती। **यदूनां पते इति**। संप्रति त्वं यदून् पालय। तया प्रभवत्या तव किं प्रयोजनमिति भावः॥ ४२॥ अपस्मारो दुःखोत्थधातुवैषम्योद्भूतचित्तविप्लवः॥ मथुरास्थं श्रीकृष्णं केनापि द्वारा ललिता संदिशति—**अङ्गेति**।

---

उन्मादो हृद्भ्रमः॥ ४१॥ त्वङ्गद्भ्रूश्चलद्भ्रूयुगला॥ ४२॥ अपस्मारो दुःखोत्थधातुवैषम्याद्युद्भूतश्चित्तविप्लवः। अपस्मारिणीं लोकप्रसिद्धेनापस्मारेण युक्ताम्। न तु

कृष्ण त्वद्विरहोत्थितैर्मम सखीमन्तर्विकारोर्मिभि-
ग्रस्तां प्रेक्ष्य वितर्कयन्ति गुरवः संप्रत्यपस्मारिणीम् ॥४३॥

अथ **व्याधिः**—स यथा रससुधाकरे—

शय्या पुष्पमयी परागमयतामङ्गार्पणादश्नुते
ताम्यन्त्यन्तिकतालवृन्तनलिनीपत्राणि गात्रोष्मणा ।
न्यस्तं च स्तनमण्डले मलयजं शीर्णान्तरं लक्ष्यते
क्काथादाशु भवन्ति फेनिलमुखा भूषामृणालाङ्कुराः ॥४४॥

अथ **मोहः**—स हर्षाद्यथा विदग्धमाधवे—

दरोन्मीलन्नीलोत्पलदलरुचस्तस्य निबिडा-
द्विरूढानां सद्यः करसरसिजस्पर्शकुतुकात् ।
वहन्ती क्षोभाणां निवहमिव नाज्ञासिषमिदं
क्व वाहं का वाहं चकर किमहं वा सखि तदा ॥ ४५ ॥

---

त्वद्विरहादुद्भूतैरन्तर्विकारतरङ्गैर्ग्रस्तां मम सखीं लोकप्रसिद्धापस्माररोगवतीं गुरवः श्वशुरश्वश्र्वादयः । निबिडिता उत्तुङ्गाः प्रलापा येषु तैः ॥ ४३ ॥ व्याधिज्वरादिप्रतिरूपो विकारः । श्रीराधायाः सखी श्रीकृष्णं प्रति तस्या विरहमाह—परागमयतामित्यनेनाङ्गानां संतापो विवर्तनपरिवर्तनोद्वर्तनादिपौनःपुन्यं च लक्ष्यते । तत्र संतापेन पुष्पदलानां शोषो विवर्तनादिभिश्चूर्णीभावः पुष्पाणामङ्गानां च । सौरभ्येण परागत्वम् । तालवृन्तं व्यजनं मलयजं चन्दनपङ्कं न्यस्तमेव शीर्णान्तरं विदीर्णमध्यभागं लक्ष्यते । क्षणान्तरे तु चूर्णमेव भवतीति भावः । चकार एवार्थे । विन्यासतुल्यकाल एवेत्यर्थः । भूषा वलयाद्यलंकाररूपाः, तापशान्त्यर्थं मृणालाङ्कुरास्तेऽङ्गसंतापेन यः क्वाथः पाकस्तस्मात् फेनयुक्ताग्रा भवन्ति ॥ ४४ ॥ मोहो मूर्च्छा । श्रीराधां पृच्छन्त्यौ ललिताविशाखे प्रत्याह—**दरोन्मीलदिति** । तस्य

---

त्वदीयमहारागजातेन ॥४३॥ व्याधिर्ज्वरादिप्रतिरूपो विकारः । परागोऽत्र चूर्णम्

यथा वा श्रीदशमे—

कृष्णं निरीक्ष्य वनितोत्सवरूपशीलं
श्रुत्वा च तत्क्वणितवेणुविविक्तगीतम्।
देव्यो विमानगतयः स्मरनुन्नसारा
भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः॥ ४६॥

**विश्लेषाद्यथोद्धवसंदेशे—**

सा पल्यङ्के किसलयकुलैः कल्पिते तत्र सुप्ता
गुप्ता नीरस्तबकितदृशां चक्रवालैः सखीनाम्।
द्रष्टव्या ते कृशिमकलिता कण्ठनालोपकण्ठे
स्पन्देनान्तर्वपुरनुमितप्राणसङ्गा वराङ्गी॥ ४७॥

---

श्यामलकिशोरस्य करसरसिजस्पर्शकुतुकात् सद्यस्तत्क्षण एव विरूढानामुत्पन्नानां क्षोभाणां निवहं वहन्ती इदं क्व वाहमित्यादिकं नाज्ञासिषं सनिर्धारं न ज्ञातवत्यस्मीत्यन्वयः। क्व वाहमिति प्राङ्गणे वर्त्मनि पुष्पशय्यायां वेत्यर्थः। का वेत्यहं जटिलाया वधूः, तस्यैव वा सर्वकालभोग्या कान्तेत्यर्थः। किं चकरेति संप्रयोगे वाम्यं वा दाक्षिण्यं वा पुरुषायितत्वं वा किमहमकार्षमित्यर्थः। मत्तोऽहं किल विललाप, सुप्तोऽहं किं चकारेतिवत् लिट्॥ ४५॥ समर्थायां रतौ मोहमुदाहृत्य कैमुत्यार्थं साधारण्याभ्यासरूपायामुदाहर्तुमाह—**यथा वेति**। गोप्यः परस्परमाहुः—**कृष्णमिति**। स्मरेण नुन्नस्तासामन्तःकरणान्निष्काश्य दूरतः क्षिप्तः सारो धैर्यं यासां ताः॥ ४६॥ तासु व्रजसुन्दरीषु मध्ये श्रीराधा मया कथं परिचेतव्येति पृच्छन्तमुद्धवं प्रति श्रीकृष्ण आह—**सेति**। नीलस्तबका अश्रुजलगुच्छाः संजाता यासु तथाभूता दृशो नेत्राणि यासां तासाम्। तारकादित्वादितच्। सखीनां चक्रवालैर्मण्डलैर्गुप्ता रक्षिता कृशिम्ना कलिता व्याप्ता। कण्ठनालस्योपकण्ठे यः स्पन्दः किंचिच्चलनं तेनान्तर्वपुर्वपुषो मध्ये अनुमितः प्राण-

---

॥ ४४॥ मोहो हृन्मूढता। लीनचित्ततेति यावत्॥ ४५॥ ४६॥ ४७॥

**विषादाद्यथा** श्रीदशमे—

निजपदाब्जदलैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामैः ।
व्रजभुवः शमयन् खुरतोदं वर्ष्मधुर्यगतिरीरितवेणुः ॥
व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः ।
कुजगतिं गमिता न विदामः कश्मलेन वसनं कबरं वा ॥४८॥

**अथ मृतिः ।**

**मृतेरध्यवसायोऽत्र वर्ण्यः साक्षादियं न हि ।**

---

संज्ञः प्राणस्यास्तित्वं यस्याः सा ॥ ४७ ॥ श्रीकृष्णस्य गोगोपसहितस्यापराह्णिक-व्रजागमनलीलामास्वादयन्त्यः काश्चन गोप्यो लज्जाधैर्यकुलधर्मादिभ्यो जलाञ्जलिं दत्त्वा सुबलादय इव वयमपि तत्सङ्गिन्यः कथं नाभूम इत्यनुतापेन मुह्यन्त्यश्च तदन्तरान्तरा परस्परमाहुः—**निजेति** । ललामं चिह्नं व्रजभुवस्तदीयतृणादेः खुरतोदं गोखुरच्छेदजन्यं दुःखं निजपदाब्जदलैर्गवां पश्चात् पश्चाद्विन्यस्तैरेव शमयन् सद्य एव । तदङ्कुरपत्राद्युद्गमैरिति भावः । वर्ष्मधुर्यगतिर्गजतुल्यगतिः सन् य ईरितवेणुर्व्रजति तेन कुजगतिं वृक्षस्येव दशां गमिताः प्रापिताः कश्मलेन मोहेन । सर्वत्रात्र मोहे स्थायिभावलोपो नाशङ्कनीयः मोहस्य संचारित्वात् । संचारित्वस्य स्थायिभावसाहाय्यरूपत्वादत एवोक्तं रसामृत एव—'अन्यत्रात्मादिपर्यन्ते स्यात्स-र्वत्रैव मूढता । कृष्णस्फूर्तिविशेषस्तु न कदाप्यत्र लीयते ॥' इति ॥ ४८ ॥ अध्य-वसाय उद्यमः । इयं मृतिः प्राणत्यागो न वर्ण्येति समर्थसमञ्जससाधारणस्थायि-भाववतीनां श्रीकृष्णप्रेयसीनां नित्यसिद्धत्वेन तदसंभवात् । अन्तर्गृहागताः काश्चि-दित्यादेस्तथा 'कृष्णपद्व्यो विशन्निमम्' इत्यादेर्व्याख्या वैष्णवतोषिणीसंदर्भादौ द्रष्टव्या । क्वचित्साधकप्रायाणां कासांचिन्मृतेः संभवेऽप्यमङ्गलत्वान्न वर्ण्येति ॥

---

ललामं चिह्नम् । व्रजभुवस्तदीयतृणादेः खुरतोदं गवां खुरैः कृतच्छेदम् । निजपदाब्जदलैस्तत्स्पर्शैः सद्य एवाङ्कुरोत्पादकैः शमयन् वर्ष्मधुर्यगतिर्गज-तुल्यगतिः । ईरितवेणुरिति वेणुवादनेन तत्रापि वैशिष्ट्यं दर्शितम् । कुजो वृक्षः, कश्मलो मोहः ॥ ४८ ॥ मृतिः प्राणत्यागः । **मृतेरध्यवसाय इति ।** अन्तर्गृहगताः काश्चिदित्यादेर्गतिस्तु श्रीवैष्णवतोषिण्यां व्याख्यातास्तीति भावः

यथोद्धवसंदेशे—

यावद्व्यक्तिं न किल भजते गान्दिनेयानुबन्ध-
स्तावन्नत्वा सुमुखि भवतीं किंचिदभ्यर्थयिष्ये।
पुष्पैर्यस्या मुहुरकरवं कर्णपूरान्मुरारेः
सेयं फुल्ला गृहपरिसरे मालती पालनीया ॥ ४९ ॥

अथालस्यम्—

**साक्षादङ्गं न चालस्यं भङ्ग्या तेन निबध्यते ॥ ५० ॥**

यथा—

निरवधि दधिपूर्णां गर्गरीं लोडयित्वा
सखि कृततनुभङ्गं कुर्वती भूरि जृम्भाम्।
भुवमनुपतिता ते पत्युरास्ते सवित्री
विरचय तदशङ्कं त्वं हरेर्मूर्ध्नि चूडाम् ॥ ५१ ॥

---

श्रीराधा ललितां प्रत्याह—**यावदिति**। गान्दिनेयोऽक्रूरः। **तावदिति**। श्रीकृष्णस्य मथुराप्रस्थाननिश्चये श्रुते तु मरिष्यन्त्या मम वाक्यं नैव निःसरिष्यतीति भावः ॥ ४९ ॥ आलस्यं सामर्थ्यसद्भावेऽपि कर्तव्यवस्तुनि न चिकीर्षा तदालस्यमासक्तेर्विषयभूते वस्तुनि चेद्भवेत्तदा आसक्तेरेव लोपः स्यादिति प्रेमवतीनां कृष्णे कृष्णसंबन्धिवस्तुनि च तस्यासंभवः किंतु जरत्यादिषु विद्यमानं तदासां स्थायिभावं पुष्यतीत्याह—**साक्षादङ्गमिति** ॥ ५० ॥ कुञ्जे श्रीकृष्णेन सह विलसन्तीं श्रीराधां पद्माशिक्षितायाः कस्याश्चित् शारिकाया मुखतो जटिलाया आगमनं श्रुत्वा बिभ्यतीं श्रीराधां तदानीमेव दैवाद्गोष्ठादागता रूपमञ्जरी आश्वासयति—**निरवधीति** ॥ ५१ ॥ जाड्यमप्रतिपत्तिः। कुन्दवल्ली नान्दी-

---

॥ ४९ ॥ **साक्षादङ्गं न चेति**। आलस्यं खलु शक्तौ सत्यामप्यशक्तिव्यञ्जना। सा तु तासां कृष्णसेवादौ न संभवत्येव। न पारयेऽहं चलितुमिति कृत्रिमालस्यं ज्ञेयम्। तस्माद्विरोधिगततद्वर्णनात् स्थायिपोषणपरिपाट्येव तन्निबद्धता युक्ता

**अथ जाड्यम्—तदिष्टश्रुत्या** यथा—

गोपुरे रुवति कृष्णनूपुरे निष्क्रमाय धृतसंभ्रमाप्यसौ ।
कीलितेव परिमीलितेक्षणा सीदति स्म सदने मनोरमा ॥ ५२ ॥

**अनिष्टश्रुत्या** यथा ललितमाधवे—

आलीव्यलीकवचनेन मुहुर्विहस्ता
हस्तारविन्दविगलद्ग्रथितार्धमाल्या ।
हा हन्त हन्त किमपि प्रतिपन्नतन्त्रा
चन्द्रावली किल दशान्तरमारुरोह ॥ ५३ ॥

**इष्टेक्षणेन** यथा विदग्धमाधवे—

अहो धन्या गोप्यः कलितनवनर्मोक्तिभिरलं
विलासैरामोदं दधति मधुरैर्या मधुभिदः ।
धिगस्तु स्वं भाग्यं यदिह मम राधा प्रियसखी
पुरस्तस्मिन्प्राप्ते जडिमनिविडाङ्गी विलुठति ॥ ५४ ॥

---

सुखीमाह—गोपुरे पुरद्वारे ॥ ५२ ॥ श्रीकृष्णस्य मथुराप्रस्थाने पौर्णमासी सखेदमाह—आल्याः पद्मायाः व्यलीकवचनेन विहस्ता व्याकुला । 'विहस्तव्याकुलौ समौ' इत्यमरः । व्यलीकवचनं च तत्रैव यथा—'अज्जारूढो रहमिह पुरा सङ्गरङ्गी रहङ्गी हा पुफ्फाणं तहवि चडुले गन्तुमुक्कण्ठिदासि । आहीरीणं वहिवि गहिरुक्कोसदीहा विलावा किं ते चन्दा अनिल परिदो कण्णकुञ्जं विसन्ति ॥' इति । दशान्तरं दशमीं दशाम् ॥ ५३ ॥ विशाखा श्रीकृष्णेन मिलितायाः श्रीराधायाः प्रेमोत्कर्षं व्याजस्तुत्या वर्णयति—**अहो इति** । आमोदमानन्दम्

---

॥ ५० ॥ ५१ ॥ जाड्यमप्रतिपत्तिः ॥ ५२ ॥ **आलीव्यलीकवचनेनेति** । अस्य प्रसङ्गो ललितमाधवाज्ज्ञेयः । व्यलीकमप्रियम् ॥ ५३ ॥ **अहो धन्या इति** । अद्यावगते तस्या ईदृशस्वभावेऽपि यन्नाटकेष्वत्रापि च कुत्रचित्प्रमोदिकं

**अनिष्टेक्षणेन** यथा—

राधा वनान्ते हरिणा विहारिणी
प्रेक्ष्याभिमन्युं स्तिमिताभवत्तथा।
क्रुद्धास्य तूर्णं भजतोऽपि संनिधिं
यथा भवानीप्रतिमाभ्रमं दधे ॥ ५५ ॥

**विरहेण** यथा पद्यावल्याम्—

गृहीतं ताम्बूलं परिजनवचोभिर्न सुमुखी
स्मरत्यन्तःशून्या मुरहर गतायामपि निशि।
तथैवास्ते हस्तः कलितफणिवल्लीकिसलय-
स्तथैवास्यं तस्याः क्रमुकफलफालीपरिचितम् ॥ ५६ ॥

---

॥ ५४ ॥ वृन्दा पौर्णमासीमाह—**राधेति।** स्तिमिता स्तब्धा जाड्येन जातस्तम्भभावा तथा अभवत् यथा अभिमन्योर्भवानीप्रतिमैवेयं कामुकी न तु राधेति भ्रमम्। ततश्च भोः कृष्ण, अस्या भवानीप्रतिमाया निकटे किमर्थं वससीति कृष्णे पृष्टे इमां गन्धपुष्पचन्दनादिभिः शृङ्गारयितुमिति तेन च प्रत्युक्ते भवान्यै नम इति राधां प्रणम्य स गृहं गत इति ज्ञेयम् ॥ ५५ ॥ विप्रलब्धाया राधाया विरहपीडां व्यञ्जयन्ती वृन्दा श्रीकृष्णं प्रत्याह—गृहीतमपि ताम्बूलं न स्मरति हस्ते अस्ति वा नास्तीति नानुसंधत्ते। परिजनानां वचोभिरित्यनेन तत्र स्वतः स्पृहाभावः सूचितः। तत्रापि बहुवचनेन सशपथलदानयनाद्याश्वासः सूचितः। कलितं गृहीतम्। फणिवल्ल्यास्ताम्बूलवल्ल्याः किसलयं पत्राणि यस्य सः। क्रमुकफलस्य गुवाकस्य फाली खण्डं तया परिमितमास्यं च तथैवास्त इति। प्रथमं ताम्बूलवेष्टिता गुवाकफाल्यो मुखे याः परिजनैरर्पितास्ता न चर्वयति स्म।

---

वर्ण्यते तत्खलु विरलमेव ज्ञेयम्। स्वं मदीयम् ॥ ५४ ॥ नासूयन् खलु कृष्णायेत्यादिना श्रीभागवते तत्पतिंमन्यादीनामसूयाया निवारणाय मायया तत्तदाच्छादनं प्रतीत्यन्तरं च दर्शितम्। तस्माद्राधा वनान्त इत्यादावत्र यद्भवानीप्रतिमाकारत्वं तस्या जातं तच्च मायाया एव कार्यम्। साक्षात्तद्रूपप्रतिमयोर्बहुवैलक्षण्यात्। एवमन्यत्रापि प्रकारभेदेन तत्तत्प्रतारणमुक्तमनुक्तमपि ज्ञेयम्। तस्मान्नासूयन्नित्यनेन विरोधः कुत्रापि न मन्तव्यः ॥ ५५ ॥ फणिवल्ल्याः पक्वदलस्यैव

अथ **व्रीडा** सा **नवीनसंगमेन** यथा—

विधुमुखि भज शय्यां वर्तसे किं न तस्या
मुहुरयमनुवर्ती याचते त्वां प्रसीद ।
इति चटुभिरनल्पैः सा मयाभ्यर्थ्यमाना
व्यरुचदिह निकुञ्जश्रीरिव द्वारि राधा ॥ ५७ ॥

**अकार्येण** यथा—

पटुः किमपि भाग्यतस्त्वमसि पुत्रि वित्तार्जने
यदेतमतुलं बलादपजहर्थ हारं हरेः ।
गभीरमिति शृण्वती गुरुजनादुपालम्भनं
मणिस्रगवलोकनान्मुखमवाञ्चयन्मालती ॥ ५८ ॥

**स्तवेन** यथा—

संकुच न तथ्यवचसा जगन्ति तव कीर्तिकौमुदी मार्ष्टि ।
उरसि हरेरसि राधे यदक्षया कौमुदीचर्चा ॥ ५९ ॥

---

ततश्च खदिरचूर्णैलालवङ्गादियुक्ता पर्णवीटिका हस्तेऽर्पिता यास्ता मुखे नार्पयति सेति । निशायां गतायामपीति प्रहरत्रयव्यापिनी जडता ॥ ५६ ॥ व्रीडा लज्जा । श्रीकृष्णः सुबलमाह—**विधुमुखीति** । अनुवर्ती मल्लक्षणोजनः । याचत इति । तवाङ्गसंवाहनार्थं सोत्कण्ठ इति भावः । **द्वारीति** । तदपि शय्यायां लज्जयैव न गतेत्यर्थः ॥ ५७ ॥ मालत्याः सखी कांचिदाह—गुरुजनात् स्वमातामह्याः ॥ ५८ ॥ श्रीराधिकाया माहात्म्यं गार्गीं प्रति वर्णयन्त्यां पौर्णमास्यां दैवात्तत्रायातायां श्रीराधायां स्वोत्कर्षश्रवणेन संकुचितायां तस्यां वृन्दा सप्रौढि प्राह—**संकुचेति** । मार्ष्टि उज्ज्वलीकरोति ॥ ५९ ॥ खण्डिता श्रीराधा

---

स्वादुलेऽपि सखीभिः किशलयसमर्पणं विरहे शीतलप्रयोगापेक्षयेति ज्ञेयम् । फाली खण्डम् ॥ ५६ ॥ व्यरुचदिहेत्यत्र 'लसति बत' इति वा पाठः ॥ ५७ ॥ **पटुः किमपीति** । स्वप्रतिपक्षनायिकया प्रेषिताया मालतीमातामहीवेशधारिण्या मालतीं प्रत्युपहासवचनम् । किमपीति । असीत्यस्य विशेषणं गुरुजनादिति च गौण्या वृत्त्या तत्सदृशादित्येव ज्ञेयम् ॥ ५८ ॥ **संकुच नेति** । ललितमाव-

**अवज्ञया** यथा श्रीगीतगोविन्दे—

तवेदं पश्यन्त्याः प्रसरदनुरागं बहिरिव
प्रियापादालक्तच्छुरितमरुणद्योतिहृदयम् ।
ममाद्य प्रख्यातप्रणयभरभङ्गेन कितव
त्वदालोकः शोकादपि किमपि लज्जां जनयति ॥ ६० ॥

**अथावहित्था** सा **जैह्म्येन** यथा श्रीजगन्नाथवल्लभे—

अमुष्याः प्रोन्मीलत्कमलमधुधारा इव गिरो
निपीय क्षीबत्वं गत इव चलन्मौलिरधिकम् ।

---

श्रीकृष्णं साक्षेपमाह—**तवेति** । हे कितव, तवेदं हृदयं पश्यन्त्या मम त्वदालोकस्त्वत्कर्मकोऽवलोकः कर्ता । प्रख्यातस्य प्रणयभरस्य भङ्गेन हेतुना यः शोकस्तस्मात् सकाशादपि किमप्यनिर्वचनीयं यथा स्यात्तथा अधिकदुःखदां लज्जां जनयति । अधिकदुःखदामिति पञ्चम्यन्तपदेनाक्षेपः । यद्वा त्वां द्रष्टुमहं स्वभावादेव सदा लज्जे अधुना तु प्रणयभरभङ्गेन शोकादपि विशेषतो लज्जे इत्यर्थः ॥ हृदयं कीदृशम् । प्रियायाः पादालक्तेन छुरितं म्रक्षितमत एवारुण इव द्योतते जनिष्यमाणमत्संतापसूर्योदयसूचकं किमिव । बहिः प्रसरन्ननुरागो यस्मात्तदिव । एतावद्दिनपर्यन्तं मत्प्रतिनायिकाविषयस्तवानुरागस्त्वया हृदयमध्य एव संगोपित आसीत् । अधुना मद्बधार्थं सोऽयं निःसृतवानित्यर्थः ॥ ६० ॥ अवहित्था आकारगुप्तिः । मदनिकानाम्नी वनदेवी वितर्कयति—अमुष्याः श्रीराधाकामलेखोपहारिण्याः शशिमुख्याः गिरो निपीय प्रेमपरीक्षार्थं स्वहृदयकमलास्तद्विषयकरमणौत्सुक्यवैदग्ध्यस्तासां गोपनपरोऽयं श्रीकृष्णः स्वैरं स्वैरं मन्दं मन्दम् । 'मन्दस्वच्छ-

---

वादिरीत्या दाम्पत्ये जाते सोऽयं कयाचित् स्तवः कृत इति गम्यते । तत एव स्तवबुद्धिस्तस्या जायते । अदाम्पत्ये तु कलङ्कबुद्धिरेवेति ॥ ५९ ॥ हे कितव, तवेदं पश्यन्त्या मम त्वदालोकः कर्ता । प्रणयभरभङ्गजातं शोकमतिक्रम्यापि किमप्यनिर्वचनीयं यथा स्यात्तथा लज्जां जनयति । इदं किम् । हृदयम् । कीदृशम् । अरुणद्योति । तादृशत्वे लज्जाजनकत्वे च हेतुः—**प्रियेति** । छुरितं युक्तम् । किमिव । बहिः प्रसरन्ननुरागस्तद्विषयोऽनुरागो यत्र तदिव ॥ ६० ॥ अवहित्था आकारगुप्तिः क्षीबत्वं मत्तत्वम् । इवेति वाक्यालंकारे । कला कलना

उदञ्चत्कामोऽपि स्वहृदयकलागोपनपरो
हरिः स्वैरं स्वैरं स्मितसुभगमूचे कथमयम् ॥ ६१ ॥

**जैह्मयलज्जाभ्यां** यथोद्धवसंदेशे—

मा भूयस्त्वं वद रविसुतातीरधूर्तस्य वार्तां
गन्तव्या मे न खलु तरले दूति सीमापि तस्य ।
विख्याताहं जगति कठिना यत्पिधत्ते मदङ्गं
रोमाञ्चोऽयं सपदि पवनो हैमनस्तत्र हेतुः ॥ ६२ ॥

**दाक्षिण्येन** यथा ललितमाधवे—

उद्भूता सितकौमुदी न मधुरा वक्रेन्दुबिम्बात्तया
मृद्वीनां न निराकृता निजगिरां माधुर्यलक्ष्मीरपि ।
कोष्णैरद्य दुरावरैर्निजमनो गूढव्यथाशंसिभिः
श्वासैरेव दरोद्धुतस्तनपटैस्तस्या रुषः कीर्तिताः ॥ ६३ ॥

**ह्रिया** यथा विदग्धमाधवे—

भजन्त्याः सव्रीडं कथमपि तदाडम्बरघटा-
मपह्नोतुं यत्नादपि नवमदामोदमधुरा ।

---

न्दयोः स्वैरम्' इति नानार्थवर्गः । स्मितसुभगं यथा स्यात्तथा कथमूचे । उच्यमानवाक्यजातस्यौदासीन्यव्यञ्जकस्य सत्यत्वे स्मितादेव संभवादिति भावः ॥ ६१ ॥ **मा भूय इति** । तर्हि कुतोऽयं रोमाञ्च इति चेत्तत्राह—**यत् पिधत्ते इति** । हैमनो हिमसंभवः ॥ ६२ ॥ श्रीकृष्णो मधुमङ्गलं प्रत्याह—**उद्भूतेति** । तया चन्द्रावल्या दुरावरैरावरीतुमशक्यैः ॥ ६३ ॥ पौर्णमासी स्वगतमाह—सरोजाक्ष्याः श्रीराधायास्तनुवनी तनुरेव वनी क्षुद्रं वनं कालिन्दी-

---

भावनेत्यर्थः । स्वैरं स्वैरं मन्दं मन्दम् । 'मन्दस्वच्छन्दयोः स्वैरम्' इति नानार्थवर्गात् । कथमूचे तत्कथयेति शेषः ॥ ६१ ॥ **यत्पिधत्ते मदङ्गमिति** । तर्हि कुतोऽयं रोमाञ्च इति तदाक्षेपमाक्षिपति यत् पिधत्ते इति । हैमनो हेमन्तभवः

अधीरा कालिन्दीपुलिनकलभेन्द्रस्य विजयं
सरोजाक्ष्याः साक्षाद्वदति हृदि कुञ्जे तनुवनी ॥ ६४ ॥

**ह्रीभयाभ्यां** यथा—

हृदये त्वदीयरागं माधव दधती शमीव सा दहनम्।
अन्तर्ज्वलितापि बहिः सरसा स्फुरति क्षमागुणतः ॥ ६५ ॥

**भयेन** यथा—

चन्द्रावली मन्दिरमण्डलानि पत्युः पुरस्ताच्चिरमाचरन्ती।
वंशीनिनादेन विरूढकम्पा निनिन्द धूर्ता घनगर्जितानि ॥ ६६ ॥

**गौरवदाक्षिण्याभ्यां** यथा—

स्वकरग्रथितामवेक्ष्य मालां विलुठन्तीं प्रतिपक्षकेशपक्षे।
मलिनाप्यघमर्दनादरोर्मिस्थगिता चन्द्रमुखी बभूव तूष्णीम् ॥ ६७

---

पुलिनसंबन्धिनः कलभेन्द्रस्यातिशयोक्त्या, पक्षे श्रीकृष्णस्य विजयमाग वदति। क। हृदि हृदयरूपे कुञ्जे। तस्यासाधारणं लक्षणं वक्तुं विशिनष्टि- नवेन मदामोदेन दानगन्धेन, पक्षे मत्तताधिक्येन मधुरा माधुर्यवती। अधी चञ्चला। सरोजाक्ष्याः कीदृश्याः। तस्य कलभेन्द्रस्य आडम्बरघटां गर्जनश्रेणीम् ह्नोतुं संगोपयितुं यत्नान् भजन्त्याः कुर्वत्याः। 'आडम्बरस्तुर्यरवे गजेन्द्राणां गर्जिते।' इति नानार्थवर्गः। गर्जितमत्र विक्रमव्यञ्जिका ख्यातिः ॥६४॥ श्रीराधाया अमितार्था दूती श्रीकृष्णं प्रत्याह—**हृदय इति**। शमी छेकर इति प्रसिद्धो वृक्षः स यथा अन्तःकोटरगतेन स्वाभाविकेन दहनेन प्रतिक्षणं दह्यमानोऽपि बहि पुष्पपल्लवादिभिः सारस्यं प्रकाशयति तथेत्यर्थः। 'क्षमागुणतः क्षमा पृथिवी' पक्षे लोको मम श्रीकृष्णानुरागं न जानात्विति तेभ्यो लज्जाभयाभ्यामनुरागज्वालायाः सहिष्णुता ॥ ६५ ॥ *ललितायाः सखी काचित् चन्द्रावलीचरित्रं कुतोऽपि श्रुत्वा* आगत्य सखीसंसदि कथाप्रस्तावेनाह—**निनिन्देति**। वंशीनिनादकाले दैवान्मेघानां गर्जितेषु सत्सु धिङ्मेघानां गर्जितानि यानि मां त्रासेन कम्पयन्तीत्युक्त्वा तेषामेव मूर्ध्नि दोषं ददौ ॥ ६६ ॥ चन्द्रमुख्याः सखी वृन्दा प्राह—

---

।॥ ६२ ॥ ६३ ॥ ६४ ॥ क्षमा शान्तिः। पक्षे भूः। **चन्द्रावलीति**। प्रतिपक्ष- नायिकायाः सख्या वचनम्। निनिन्देति। वंशीनिनादघनगर्जितयोः समकालत्वं

अथ **स्मृतिः**—सा सदृशेक्षया यथा हंसदूते—

तमालस्यालोकाद्गिरिपरिसरे सन्ति चपलाः
पुलिन्द्यो गोविन्दस्मरणरभसोत्तप्तवपुषः ।
शनैः स्वेदं तासां क्षणमपनयन्यास्यति भवा-
नवश्यं कालिन्दीसलिलशिशिरैः पक्षपवनैः ॥ ६८ ॥

**दृढाभ्यासेन** यथा—

ते पीयूषकिरां गिरां परिमलाः सा पिच्छचूडोज्ज्वला
तास्तापिच्छमनोहरास्तनुरुचस्ते केलयः पेशलाः ।
तद्वक्त्रं शरदिन्दुनिन्दि नयने ते पुण्डरीकश्रिणी
तस्येति क्षणमप्यविस्मरदिदं चेतो ममाघूर्णते ॥ ६९ ॥

अथ **वितर्कः**—स **विमर्शा**द्यथा विदग्धमाधवे—

विघूर्णन्तः पौष्पं न मधु लिहतेऽमी मधुलिहः
शुकोऽयं नादत्ते कलितजडिमा दाडिमफलम् ।

---

[**स्येति**। केशपक्षे कबर्याम्। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः। स्थगिता संवृतक्षोभेत्यर्थः ॥ ६७ ॥ कृष्णप्रेषितां दूतीं प्रति कलहान्तरिता श्यामा प्राह—स्मृतिः पूर्वानुभूतार्थस्मृतिः । ललिता संदेशहारकं मधुरां हंसं पन्थानमु-पदिशन्ती प्रार्थयते—**तमालस्येति** ॥ ६८ ॥ प्रोषितभर्तृका श्रीराधा विलप-न्त्युद्धवं प्रत्याह—**त इति** । पीयूषकिरामिति क्विबन्तषष्ठ्यन्तम् । परिमला इत्य-नेन गिरां पुष्पमञ्जरीत्वमारोपितं तेन चातिस्पृहणीयत्वं व्यञ्जितम् । पुण्डरीकस्य श्रीः श्वेतिमशोभा ययोस्ते ॥ ६९ ॥ वितर्को हेतुपरामर्शादिजन्योऽत्यूहः ॥ विम-र्शात् हेतुपरामर्शात् । वने निह्नोतुं श्रीकृष्णमन्विष्यन्ती श्रीराधा वितर्कयति—**विघूर्णन्त इति** । व्याप्तिग्रहणरूपो विचारः पूर्वपूर्वानुभवात् । न चरति न

---

बोधयति ॥ ६५ ॥ ६६ ॥ ६७ ॥ पूर्वानुभूतार्थप्रतीतिः स्मृतिः । पीयूषकिरा-मिति क्विबन्तस्य षष्ठ्यन्तं पदम् ॥ ६८ ॥ वितर्को विमर्शानन्तरं विचारः । विमर्शो हेतुपरामर्शः । विशेषस्तु पूर्वग्रन्थाज्ज्ञेयः ॥ ६९ ॥ **विघूर्णन्त इति** ।

विवर्णा पर्णाग्रं चरति हरिणीयं न हरितं
पथानेन स्वामी तदिभवरगामी ध्रुवमगात् ॥ ७० ॥

**संशयाद्यथा** ललितमाधवे—

विदूरे कंसारिर्मुकुटितशिखण्डावलिरसौ
पुरा गौराङ्गीभिः कलितपरिरम्भो विलसति ।
न कान्तोऽयं शङ्के सुरपतिधनुर्धाममधुर-
स्तडिल्लेखाहारी गिरिमवलम्बे जलधरः ॥ ७१ ॥

अथ **चिन्ता** सा **इष्टानवाप्त्या** यथा पद्यावल्याम्—

आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं यदेतदपरं यच्चैकतानं मनः ।
मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते
तद्ब्रूयाः सखि योगिनी किमसि भोः किं वा वियोगिन्यसि ॥७२

यथा वा विदग्धमाधवे—

अक्ष्णोर्द्वन्द्वं प्रसरति दरोद्घूर्णतारं मुरारेः
श्वासाः क्लृप्तां किल विचकिलैर्मालिकां म्लापयन्ति ।

---

भक्षयति ॥ ७० ॥ संशयः कोटिद्वयं स्पृशन्निर्णेतुमशक्यं ज्ञानं तस्मात् । प्रोषितभर्तृका श्रीराधा दिव्योन्मादेव भ्रमन्ती गोवर्धने मेघमालोक्याह—**विदूर इति** । गाढं निभाल्य निश्चिनोति—**न कान्तोऽयमिति** ॥ ७१ ॥ चिन्ता इष्टलाभार्थमनिष्टपरिहारार्थं च भावना । ज्ञाततत्त्वापि विशाखा पूर्वरागवतीं केनापि प्रकारेणाहं श्रीकृष्णसङ्गं लप्स्य इति ध्यायन्तीं श्रीराधां पृच्छति—नासाग्रे नयनमित्यादिध्यानमात्रस्यानुभवः । एकतानमनन्यवृत्ति ॥ ७२ ॥ नायिकानामिव नायकेऽपि संचारिभावा उदाहर्तव्या इति प्रदर्शयितुमाह—**यथावेति** ।

---

अत्र व्याप्तिग्रहरूपो विचारः पूर्वपूर्वानुभवात् ॥ ७० ॥ **संशयाद्यथेति** । संशयानन्तरं यो विपर्यासस्तस्मादित्यर्थः ॥ **न कान्तोऽयमिति** । अत्र 'न कंसारिः' इति वा पाठः ॥ ७१ ॥ **नासाग्रे इति** । अत्र नातिसंतुष्य काव्यान्तरमुदाहरति—**यथावेति** । छिदुरेति कर्मकर्तरिप्रयोगः । तत्तया स्वयं छिद्यमान-

केयं धन्या वसति रमणी गोकुले क्षिप्रमेतां
नीतस्तीव्रामयमपि यया कामपि ध्याननिष्ठाम् ॥ ७३ ॥

**अनिष्टाप्त्या** यथा—

बाल्यस्योच्छिदुरतया यथा यथाङ्गे
राधाया मधुरिमकौमुदी दिदीपे ।
पद्मायाः मुखकमलं विशीर्णमन्तः
संताम्यद्भ्रमरमिदं तथा तथासीत् ॥ ७४ ॥

यथा वा—

मा चन्द्रावलि मलिना भव राधायाः समीक्ष्य सौभाग्यम् ।
ज्योतिर्विदोऽपि विदुः कृष्णे किल बलवती तारा ॥ ७५ ॥

---

पूर्वरागवन्तं कथमहं राधासङ्गं लप्स्य इति ध्यायन्तं श्रीकृष्णं दूरादालोक्य पौर्णमासी वितर्कयति—विचकिलैर्मल्लिकापुष्पैः ॥ ७३ ॥ नान्दीमुखी पौर्णमासीं प्रत्याह—**बाल्यस्येति** । उच्छिदुरतया स्वयमुच्छिद्यमानतया । कर्मकर्तरि कुरच् । मुखपक्षे अन्तरन्तःकरणं तदेव संताम्यन् भ्रमरो यत्र तदासीत् अभूत् ॥ ७४ ॥ श्रीराधायाः सौन्दर्येण पद्मायाश्चिन्तामुदाहृत्य तस्याः सौभाग्येन चन्द्रावल्या अपि चिन्तामुदाहर्तुमाह—**यथा वेति** । ललितया पाठिता काचित् सारी चन्द्रावलीनिकटे पठति—**मेति** । कृष्णे कृष्णपक्षे श्रीनन्दपुत्रे च । तारा अश्विन्यादिः

---

तयेत्यर्थः । विशीर्णत्वं स्खलितप्रकाशत्वेनानवस्थितयथावदवयवत्वम् । मुखपक्षे अन्तःकरणं तदेव संताम्यन् भ्रमरो यत्र तादृशम् ॥ ७२ ॥ सा चन्द्रावलीति श्रीराधासख्या शिक्षितायाः सारिकाया वचनम् । यूथेशाग्रे विपक्षसखीनां तादृशधार्ष्ट्यस्यासंप्रतिपत्तेः । सौभाग्यं तादृशविषयककान्तप्रेम्णा तादृश्यालालित्यम् । तच्च नायुक्तमित्याह—**ज्योतिर्विद इति** । कृष्णे कृष्णस्वरूपे, पक्षे तारा तद्विशेषरूपा, श्लेषे तु तारा तद्विशेषनाम्नी श्रीराधा 'कृष्णे कृष्णाख्ये निजकान्ते

अथ मतिः—सा यथा पद्यावल्याम्—

आश्लिष्य वा पादरतां पिनष्टु मा-
मदर्शनान्मर्महतां करोतु वा।
यथा तथा वा विदधातु नागरो
मत्प्राणनाथस्तु स एव नापरः॥ ७६॥

---

श्रीराधा च ॥ ७५॥ मतिर्विचारोत्थमर्थनिर्धारणम्। कदाचिन्माथुरविरहव्यथाविशीर्णाङ्गीं श्रीराधामालोक्य पौर्णमासी स्नेहेनोपदिदेश। वत्से, श्रीभगवतो नारायणस्य पूजापरिचर्याजपस्तुत्यादिकं त्वामहमुपदिशामि तत्रैव स्वमनो निमज्ज्य दुस्तरं समयमिमं यापय यावच्छ्रीकृष्णागमनमुपायोऽयं लोकद्वयसुखद एवेति त्वं नारायणभक्ता भवेति। ततस्तां प्रति श्रीराधाह—हे भगवति, एवं चेत् सर्वज्ञस्य गर्गस्योक्तिप्रामाण्येन नारायणसमस्य श्रीकृष्णस्यैव पूजाजपस्तुत्यादिकं कथं मां नोपदिशसि। ततश्च मया तेनैव प्रकारेणाराधितोऽसौ प्रादुर्भूय स्वदर्शनं मे दास्यतीति। ननु स स्वीयस्वभावं त्यक्तुमसमर्थः पुनरपि ते विरहदुःखं दास्यतीति चेत्तत्राह—**आश्लिष्येति**। पादरतां चरणयोः पतितां मामाश्लिष्य स्वहस्ताभ्यां धृत्वा उत्थापयन् स्ववक्षसि निधाय स्वबाहुभ्यां पिनष्टु अतिगाढतरालिङ्गनेनानन्दसमुद्रे निमज्जयतु। किं वा तदैवादर्शनं प्रदाय। ल्यब्लोपे पञ्चमी। मर्महतां करोतु इतोऽप्यधिकदुःखसमुद्रे निमज्जयतु। यथा तथा वेत्यनेन मत्सम(क)क्षमेव मत्प्रतिनायकां रमयतु वेति व्यञ्जितम्। यतो लम्पटः तस्य लाम्पट्यमेव विचाराभावव्यञ्जकमिति भावः। किंतु व्यवहारे वा परमार्थे वा मम प्राणानां नाथः स एव नत्वन्यः तेन श्रीनारायणमहं परलोकार्थमपि सेवितुं न शक्नोमि मम श्रीकृष्णैकतानत्वादिति भावः। प्रकारान्तरेण व्याख्यायां स एव नापर इत्यन्ययोगव्यवच्छेदकेनैवकारेण व्यञ्जितो रसाभासो दुर्निवार एव स्यात्। स एव ना पुरुषः कीदृशः। पर इति व्याख्यायामपि स एव दोषः। यद्वा स तु मत्प्राणनाथ एव

---

॥ ७३॥ ७४॥ ७५॥ मतिर्विचारोत्थमर्थनिर्धारणम्॥ कापि सखी कस्याश्चित् श्रीकृष्णप्रेयस्याः सत्त्वपरीक्षार्थमेवमुक्तवती। स खलु तरुणवयास्तव नववयस्काया जातु सुखदायी दृश्यते तथापि तदेकानुरक्तां त्वामुपदिशामि तदनुरागं त्यजेति। तत्राह—**आश्लिष्येति**। पादरतामिति तु त्यागभयाद्दैन्योक्तिः

